THE

# BRAHMASŪTRA-SHĀNKARBHĀSHYAM

with the commentaries

BHĀSHYA-RATNAPRABHĀ, BHĀMATĪ AND NYĀYANIRNAYA

OF

SHRĪGOVINDĀNANDA, VĀCHASPATI AND ĀNANDAGIRI,

EDITED BY

Late MAHĀDEVA ŚĀSTRĪ BĀKRE,

PANDIT OF WILSON COLLEGE, BOMBAY,

AND

REVISED BY

WĀSUDEV LAXMAṆ S'ĀSTRĪ PAṆS'ĪKAR.

Third Edition.

PUBLISHED

BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1934.

*Price 8 Rupees.*

# ब्रह्मसूत्रशांकरभाष्यम् ।

## श्रीगोविन्दानन्द-वाचस्पति-आनन्दगिरिप्रणीत-

### भाष्यरत्नप्रभा-भामती-न्यायनिर्णय( आनन्दगिरीय )-

व्याख्यात्रयोपेतम् ।


कै० बाकेइत्युपाह्वगङ्गाधरभट्टसूनुना महादेवशर्मणा

चतुःसूत्रीभामत्यां टिप्पणयोजनेन परिष्कृतम् ।

तस्येदं

तृतीयं संस्करणं

पणशीकरोपाह्वलक्ष्मणात्मजवासुदेवशर्मणा संशोधितम् ।


---

वादिव्रातगजेन्द्रदुर्मदघटादुर्गर्वसंकर्षणः श्रीमच्छंकरदेशिकेन्द्रमृगराडायाति सर्वार्थवित् ।
दूरं गच्छत वादिदुःशठगजाः संन्यासदंष्ट्रायुधो वेदान्तोरुवनाश्रयस्तदपरं द्वैतं वनं भक्षति ॥

माधवः

---


तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः

स्वीये "निर्णयसागराख्य" मुद्रणयन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

---

शाकः १८५५, खिस्ताब्दः १९३४

---

मूल्यं ८ रूप्यकाः ।

# भूमिका

## श्रीगणेशाय नमः ।

## श्रीसद्गुरुचरणारविन्दाभ्यां नमः ।

**वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताभूत् ।**
**निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शंकरमर्चिताङ्घ्रिम् ॥ १ ॥**

सर्वोऽपि प्राणभृद्वर्गो निसर्गत एवेष्टमभीप्सुरनिष्टपरिजिहीर्षुश्च भवतीति भगवानाम्नायस्तदुपायं तात्पर्येण प्रतिपादयन्नखिलं प्राणिजातमनुगृह्णाति । स च ऋग्यजुःसामाथर्वभेदैर्मन्त्रब्राह्मणारण्यकोपनिषदादिभेदैर्बहुधा विभक्तोऽप्यर्थनिरूपणसौकर्याय पुनः कर्मकाण्डोपासनाकाण्डज्ञानकाण्डभेदेन त्रिधा व्यभाजि पूर्वाचार्यैः । तत्र मन्त्रभागस्याध्वरप्रयोगसमवेतद्रव्यदेवताद्यर्थस्मारकतया कर्मकाण्डत्वं ब्राह्मणभागस्य च मन्त्रोदितार्थेतिकर्तव्यताबोधनपरस्य तच्छेषतामुपनिषद्भागस्य च यथायथमुपासनाज्ञाननिरूपणपरस्योपासनाकाण्डत्वं ज्ञानकाण्डत्वं चाचक्षते । तत्रानाद्यविच्छिन्नवैदिकसंप्रदायस्थेम्नाऽनुन्मिषत्स्वरवर्णक्रमविपर्ययासु निखिलकामदोग्ध्रीषु कर्मकाण्डशब्दितश्रुतिषु यद्यपि 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यादयः परःसहस्रं स्वःस्वाराज्यादिप्रापका उपायाः श्रूयन्ते । स्वःपदं च दुःखासंभिन्नमक्षयं सुखं ब्रूते । तदुक्तम्—

**'यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम् ।**
**संकल्पोपनतं यच्च तत्सुखं स्वःपदास्पदम् ॥ १ ॥' इति**

'अपाम सोमममृता अभूम' इत्यादिमन्त्रवर्णश्चामुमेवार्थं द्रढयति । अथापि 'तद्यथेह कर्मचितो लोकः क्षीयत एवममुत्र पुण्यचितो लोकः क्षीयते', 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' इत्यादिश्रुतेः 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्यादिस्मृतेः, यत्कृतकं तदनित्यमिति व्याप्तेश्च स्वर्गादिसुखस्य क्षयित्वावगमात्, 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः', 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्याद्यमृतत्वकामं प्रत्यात्मश्रवणादिविधिभ्यः, 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिना चामृतत्वंप्रति साधनान्तरनिराकरणाच्च 'अपाम सोमं' इत्यादिवाक्येष्वमृताक्षय्यादिपदानि सव्यपेक्षामृतत्वाक्षयत्वाद्यभिप्रायतया व्याख्यातुमुचितानि । तथाच स्मृतिः—

**'आभूतसंप्लवं स्थानममृतत्वं प्रचक्षते' इति ।**

सातिशयत्वं चास्य स्वर्गादिसुखस्यावगम्यते । ज्योतिष्टोमयाजी स्वर्गी भवति राजसूययाजी च स्वाराडिति । तदिदमुक्तमीश्वरकृष्णैः साङ्ख्यकारिकासु—

**'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' इति**

व्याख्यातं चैतद्वाचस्पतिमिश्रैः—

"गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः, एतदुक्तं भवति-श्रूयत एव परं न केनापि क्रियत इति । तत्र भव आनुश्रविक इति । तत्र प्राप्तो ज्ञात इति यावत् । आनुश्रविकोऽपि कर्मकलापो दृष्टेन तुल्यो वर्तत इत्यैकान्तिकात्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात् । यद्यपि चानुश्रविक इति सामान्येनाभिहितं तथापि कर्मकलापाभिप्रायं द्रष्टव्यं विवेकज्ञानस्याप्यानुश्रविकत्वात् । तथा च श्रूयते—'आत्मा वा अरे द्रष्टव्यः', 'न स पुनरावर्तते' इति । अस्यां प्रतिज्ञायां हेतुमाह—'स ह्यविशुद्धिक्षयातिशययुक्तः । अविशुद्धिः—सोमादियागस्य पशुबीजादिवधसाधनता । यथाह स्म भगवान् पञ्चशिखाचार्यः—'स्वल्पः संकरः सपरिहारः सप्रत्यवमर्षः' इति । स्वल्पः संकरः—ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनापूर्वेण, सपरिहारः—कियतापि प्रायश्चित्तेन परिहर्तुं शक्यः । अथ प्रमादतः प्राय-

ष्ठिसमपि नाचरितं प्रधानकर्मविपाकसमये स विपच्यते तथापि यावदसावनर्थं सूते तावत् सप्रत्यवमर्षः—प्रत्यवमर्षेण सहिष्णुतया सह वर्तत इति । मृष्यन्ते हि पुण्यसंभारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम् । नच 'मा हिंस्यात्सर्वा भूतानि' इति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेत' इत्यनेन बाध्यत इति युक्तं, विरोधाभावात् । विरोधे हि बलीयसा दुर्बलं बाध्यते, न चेहास्ति कश्चिद्विरोधः, भिन्नविषयत्वात् । तथाहि—"'मा हिंस्यात्' इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वक्रत्वर्थत्वमपि 'अग्नीषोमीयं पशुमालभेत' इत्यनेन वाक्येन च पशुहिंसायाः क्रत्वर्थत्वमुच्यते नानर्थहेतुत्वाभावः, तथासति वाक्यभेदप्रसङ्गात् । नचानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधोऽस्ति । हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति । क्षयातिशयौ च फलगतावप्युपायउपचरितौ, क्षयित्वं च स्वर्गादेः सत्त्वे सति कार्यत्वादनुमितम् । ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनं वाजपेयादयस्तु स्वाराज्यस्येत्यतिशययुक्तत्वम्, परसंपदुत्कर्षो हि हीनसंपदं पुरुषं दुःखाकरोति 'अपाम सोमममृता अभूम' इति चामृतत्वाभिधानं चिरस्थेमानमुपलक्षयति । यदाहुः—'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति । अत एव च श्रुतिः—'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति' । तथा 'कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः । तथाऽपरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः' इति ।" तस्माच्चेदमवधार्यते न कर्मकाण्डस्य निरतिशयाक्षयसुखोपायज्ञापकत्वमिति ।

किंतु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादिवचननिचयप्रामण्यान्नानाविधभोक्तृभोक्तव्यादिभेदप्रपञ्चस्य ब्रह्मण्यविद्यापरिकल्पितत्वात्, 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिनिन्दया पारमार्थिकभेदनिराकरणात्, 'तरति शोकमात्मवित्' इत्यादिश्रुतिशिरःशतवशेन निर्विशेषब्रह्मात्मैकत्वविद्ययानाद्यविद्यानिवृत्तिबोधनात्, 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिश्रुत्यात्मन उपनिषदेकगम्यत्वावधारणादैकान्तिकेष्टानिष्टप्राप्तिपरिहारोपायभूतां ब्रह्मविद्यामाम्नायशिरोभूता उपनिषद एव प्रतिपादयन्तीत्यत्र न काचिद्विप्रतिपत्तिः श्रुतेरन्तिमप्रमाणत्वमभ्युपगच्छताम् । उपनिषच्छब्दं चैवं व्याचख्युः श्रीमच्छङ्करभगवत्पादा काठकोपनिषद्भाष्ये—

'सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति । उपनिषच्छब्देन न व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते । केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इत्युच्यते । मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यां उपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते । तथाच वक्ष्यति–'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति । पूर्वोक्तविशेषणान्मुमुक्षून्वा परं ब्रह्म गमयतीति ब्रह्मगमयितृत्वेन योगाद्ब्रह्मविद्योपनिषत् । तथाच वक्ष्यति–'ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युः' इति । लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्याप्युपनिषदित्युच्यते । तथाच वक्ष्यति–'अमृतत्वं भजन्ते' इति । ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति उपनिषदधीमहेऽध्यापयाम इति च । एवं नैष दोषः । अविद्यादिसंसारहेतुविशरणादेः सदिधात्वर्थस्य ग्रन्थमात्रेऽसंभवात् विद्यायां च संभवात् । ग्रन्थस्यापि तादर्थ्येन तच्छब्दोपपत्तेः' इति ।

तदविद्यादिसंसारबीजविशरणपटीयसीमुपनिषच्छब्दवाच्यां ब्रह्मविद्यां प्रतिपादयन्तीनामप्युपनिषदां परस्परविरुद्धार्थप्रतिपादकतयाऽऽभासमानानां यथार्थमर्थमनवगच्छतां श्रुतिप्रामाण्यवादिनामपि परस्परमतप्रतिक्षेपेण विवदतामात्मानमधिकृत्य परःशतं राद्धान्ताः प्रववृतिरे । तथाहि–केचिदस्य कर्तृत्वभोक्तृत्वादिमत्त्वमातिष्ठन्ते, केचित्कर्तृत्वमेव न भोक्तृत्वं केचिदणुत्वं, केचिन्महत्त्वं केचित्प्रकाश्यत्वमात्रं केचित्प्रकाशकत्वमात्रमित्यादि । श्रुतेः प्रामाण्यमनभ्युपगच्छन्तो लोकायतिकास्तु केवलमुच्छृङ्खलं तर्कमास्थायेत्थं प्रलपन्ति—

पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि । तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते । तेषु विनष्टेषु सत्सु स्वयं विनश्यति । तस्माच्चैतन्यविशिष्टदेह एवात्मा । अत एवच स्थूलोऽहं कृशोऽहं गौरोऽहमित्यादिसामानाधिकरण्यमप्युपपद्यते । मम देह इति बुद्धिस्तु राहोः शिर इतिवदौपचारिकी । नचात्मनो देहादतिरेके किंचित्प्रमाणमप्यस्ति । प्रत्यक्षमेव हि प्रमाणम् । नच तद्देहादतिरिच्यमानमात्मानमहंप्रत्ययगम्यं प्रमापयति । अनुमानं तु प्रमितिकरणतावच्छेदकधर्मासंपृक्तमेव न किंचिदपि प्रमापयितुमर्हति प्रागेवात्मनो देहातिरेकम् । तथाहि—अनुमानप्रामा-

ण्यवादिभिर्व्याप्तिपक्षधर्मताविशिष्टं लिङ्गमेव गमकमभ्युपगतम् । व्याप्तिश्चोपाधिविधुरः संबन्धः । स न स्वरूपसन्नेव फलाय कल्पत इति ज्ञायमानस्य तस्य हेतुत्वं वक्तव्यम् । तच्चानुपपन्नं व्याप्तिग्रहोपायाभावात् । न तावत्प्रत्यक्षं सत्संप्रयुक्तार्थबुद्ध्युपजनस्वभावस्य तस्य भूतभविष्यद्विप्रकृष्टविषयोपसंहारबलात् व्याप्तेर्ग्रहणेऽशक्तत्वात् । शब्दोऽप्यनुमानकक्षाप्रविष्टस्तत्प्रत्याख्यानप्रत्याख्यात एवेति नास्ति किंचिदात्मनो देहातिरेके प्रमाणम् । एवंच देहोच्छेद एव मोक्षः । ऐहलौकिकं तत्तद्विषयोपभोगजन्यं सुखमेव स्वर्गः । कण्टकादिजनितं दुःखमेव नरकः । जगद्वैचित्र्यं चाग्निजलयोरुष्णत्वशीतत्वादिवत्स्वभावादेवोपपद्येत । अग्निहोत्राद्युपदेशश्च बुद्धिपौरुषहीनानां जीविकोपाय इति ।

तदेतच्चार्वाकमतमसहमाना बौद्धा व्याप्तिग्रहोपायाभावं प्रत्याचक्षते—

**'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।**
**अविनाभावनियमः—' इति**

धूमधूमध्वजयोरविनाभावः कार्यकारणभावान्निर्णीयते यदि धूमो वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यात् । तत्र-(वह्निजन्यत्वे-)ऽपि समुपजायमानाशङ्का व्याघातेनापनोदनीया यदि धूमो वह्निजन्यो न स्याद्धूमार्थिनो न वह्नौ प्रवर्तेरन्निति । आशङ्काया व्याघातावधिकत्वात् । तस्मात्कार्यकारणभावादविनाभावनिश्चय इति कार्यकारणभावनिश्चयश्च कार्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः । कार्यस्योत्पत्तेः प्रागनुपलम्भः, कारणोपलम्भे सत्युपलम्भः, उपलब्धस्य पश्चात्कारणानुपलम्भादनुपलम्भ इति पञ्चकारण्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते । एवं स्वभावात् (तादात्म्यनिश्चयात्) अविनाभावो निश्चीयते—यदि शिंशपा वृक्षत्वमतिपतेत्स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः । शिंशपावृक्षयोश्च तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामानाधिकरण्यबलादुपपद्यते । नह्यत्यन्ताभेदे सत्येतत्संभवति युगपत्प्रयोगायोगात् ।

इत्येवमनुमानं प्रतिष्ठाप्य तत्सध्रीचीनात् 'सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यम्' इति भगवतो भावनाचतुष्टयोपदेशात्स्वस्वबुद्ध्यनुसारेण चतुर्विधतत्त्वनिर्णयेन ते माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिक-भेदेन चतुर्धा अभूवन् ।

तत्र माध्यमिकास्तावत्-भगवतोपदिष्टं नीलादिक्षणानां क्षणिकत्वं सत्त्वेन हेतुनानुमातव्यमितिमन्वानाः 'यत् सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावाः' इत्यादिरीत्या भगवदुपदिष्टमर्थं विभावयन्तो भगवता भिक्षुपादप्रसारिकान्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वा-ऽनुकूलवेदनीयत्व-सर्वगतत्व-सर्वसत्यत्वव्यावर्तनेन सर्वशून्यतायामेव पर्यवसानं बोधितमिति मन्यन्ते ।

अपरेतु—गुरूक्तार्थाङ्गीकारलक्षणमाचारमान्तरस्य शून्यत्वं कथमिति पर्यनुयोगं च कृतवन्तो योगाचारप्रथामापुवन्तो बाह्यमर्थमनङ्गीकुर्वाणाः अनादिवासनावशाद्बुद्धिरेवानेकाकारावभासत इति ब्रुवाणाः प्रागुक्तचतुर्विधभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदय एव महोदय इति मन्यन्ते ।

अन्येतु—सूत्रस्यान्तं पृच्छन्तो भगवता बोधिताः सौत्रान्तिकप्रथामापुः । ये बाह्यमर्थजातमनुमेयं मन्यन्ते ।

परेतु—बाह्येषु गन्धादिषु आन्तरेषु रूपादिस्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकानचीकथद्भगवान् । द्वितीयांस्तु विज्ञानमात्रग्रहाविष्टान् विज्ञानमेवैकं सदिति । तृतीयानुभयं सदित्यभिमत्य स्थितान् विज्ञेयमनुमेयमिति । सेयं विरुद्धा भाषेति वर्णयन्तो वैभाषिकाख्यया ख्याताः ।

एवमार्हतादीनि सन्ति भूयांस्यात्मानमधिकृत्य प्रवृत्तानि दर्शनानि । तेषु केषांचिद्युक्तिगाढतया सांख्यादीनां च शिष्टैरपि केनचिदंशेन परिगृहीततया श्रुतिमूलत्वेनाभासमानतया च मन्दप्रज्ञमुमुक्षुजनव्यामोहकतया सम्यग्दर्शनप्रतिपक्षभूतत्वात्तन्निराकरणाय सम्यग्दर्शनोपायभूतोपनिषद्गूढार्थनिर्णयाय च भगवान्बादरायणश्चतुर्भिरध्यायैर्ब्रह्ममीमांसाशास्त्रमन्वशिषत् । तदपि स्वस्वसिद्धान्तानुसारेण व्याचक्षाणैः कतिपयैः स्वार्थात्प्रच्याव्य दुरवस्थामापाद्यमानमवलोक्य भगवान् महेश्वरो मानुषेषु शंकरयतिरूपेणावतीर्य तद्व्याचक्षाणः स्वार्थे समन्वाययञ्छ्रुतीः स्वार्थे प्रतिष्ठापयामास ।

तदेवं प्रौढेः परां काष्ठामारूढस्यास्य ग्रन्थरत्नस्य निगूढतरभाष्यकृदाशयप्रकटनालंकर्मीणभाष्यरत्नप्रभा-भामती-न्यायनिर्ण-

शाख्यव्याख्यात्रितययुतस्य मुद्रणे बद्धपरिकरैः श्रीमद्भिर्निर्णयसागरमुद्रणालयाधिपतिभिरस्य परिशोधनादिसंस्करणे न्ययोजि अधीततर्कव्याकृतिवेदान्तो धूपकरकुलावतंसो रामचन्द्रशर्मा । तस्मिंश्च दुर्दैवोपनिपातादन्तरैव स्मृतिमात्रपात्रे संपन्ने द्वितीयाध्यायतृतीयपादमारभ्यासमाप्त्यस्य परिशोधनमहमकरवम् । तत्र मम ग्रन्थपरिशोधनकर्मणि प्रथमप्रवृत्तस्य दृष्टिदोषवशाद्वा प्रमादाद्वा व्युत्पत्त्यपरिपाकाद्वा समुपजातानां स्खलितानां प्रबोधनेनानुगृह्णन्तु विचक्षणा मां येन द्वितीयसंस्करणे यतिष्ये तन्मार्जनायेति सशिरःप्रणाममभ्यर्थयते—

महामहोपाध्यायश्रीदशिवकुमारमिश्रचरणान्तेवासी—
बाके इत्युपाह्वो महादेवशर्मा ।

# द्वितीयावृत्तिसम्बन्धि निवेदनम् ।

अस्मिन्द्वितीयसंस्करणे रा. रा. **मङ्गेशराव तेलंग** इत्येतैः, केटायां राज्ञा भिषक्कर्माधिकृतैः **'डॉक्टर'**, **'रावसाहेब'** इत्युपपदधारिभिः **'रामजी धोंडजी खानोलकर'** इत्येतैः पूर्वावृत्तिस्थान्यशुद्धानि बोधयित्वा साहाय्यकमाचरितम् । तत्रापि खानोलकरैः प्रायो रत्नप्रभायामेव कृतं भूरि साहाय्यम् । अत उभयोरपि स्मरामि मुहुर्मुहुरुपकारजातं प्रकाशयामि च सप्रमोदमिति शम् ।

बाके इत्युपाह्वो महादेवशर्मा ।

श्रीः ।

# ब्रह्मसूत्रशांकरभाष्यस्थविषयाणामनुक्रमणिका ।

## प्रथमोऽध्यायः १

### प्रथमः पादः ।



#### १ जिज्ञासाधिकरणम् ।



#### २ जन्माद्यधिकरणम् ।



#### ३ शास्त्रयोनित्वाधिकरणम् ।



द्वितीयवर्णकम्—



#### ४ समन्वयाधिकरणम् ।



द्वितीयवर्णकम्—

## ५ ईक्षत्यधिकरणम्।



## ६ आनन्दमयाधिकरणम्।

**७ अन्तरधिकरणम् ।**



**८ आकाशाधिकरणम् ।**



**९. प्राणाधिकरणम् ।**



**१० ज्योतिश्चरणाधिकरणम् ।**



**११ प्रातर्दनाधिकरणम् ।**

## प्रथमाध्याये द्वितीयः पादः ॥ २ ॥



### १ सर्वत्रप्रसिद्ध्यधिकरणम्।



### २ अत्रधिकरणम्।



### ३ गुहाप्रविष्टाधिकरणम्।



### ४ अन्तराधिकरणम्।



### ५ अन्तर्याम्यधिकरणम्।

## प्रथमाध्याये तृतीयः पादः ॥ ३ ॥

### १ द्युभ्वाद्यधिकरणम् ।

## द्वितीयाध्याये तृतीयः पादः ३

## द्वितीयाध्याये चतुर्थः पादः ४



## तृतीयोऽध्यायः ।

### प्रथमः पादः ।

---

## अथ चतुर्थोऽध्यायः ।

### प्रथमः पादः ।

समाप्तेयं ब्रह्मसूत्रशांकरभाष्यस्थविषयसूची ।

ॐ तत्सत् ।

# ब्रह्मसूत्रशांकरभाष्यम् ।

## भाष्यरत्नप्रभा—भामती—न्यायनिर्णयव्याख्यात्रयोपेतम् ।

### प्रथमोऽध्यायः ।

### ( उपोद्घातः । )

**भाष्यरत्नप्रभाव्याख्या श्रीरामानन्दयतिप्रणीता ।**

यमिह कारुणिकं शरणं गतोऽप्यरिसहोदर आप महत्पदम् । तमहमाशु हरिं परमाश्रये जनकजाङ्कमनन्तसुखाकृतिम् ॥ १ ॥

श्रीगौर्या सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदं प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डासिना ।
वन्दे चर्मकपालिकोपकरणैर्वैराग्यसौख्यात्परं नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम् ॥ २ ॥
यत्कृपालवमात्रेण मूको भवति पण्डितः । वेदशास्त्रशरीरां तां वाणीं वीणाकरां भजे ॥ ३ ॥
कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्याधिपूज्यश्रीगौरीनायकाभिप्रकटनशिवरामार्यलब्धात्मबोधैः ।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभासास्मितास्यश्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतोऽहं यथालिः ॥ ४ ॥
श्रीशंकरं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतं च वच्मि । श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायम् ॥ ५ ॥
विस्तृतग्रन्थवीक्षायामलसं यस्य मानसम् । व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा ॥ ६ ॥

**भामतीव्याख्या श्रीवाचस्पतिमिश्रप्रणीता ।**

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोऽबवनयः ।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम् ॥ १ ॥
निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि । स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥ २ ॥
षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि । शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ ३ ॥
मार्तण्डतिलकस्वामिमहागणपतीन्वयम् । विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥ ४ ॥
ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे । ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥ ५ ॥

**न्यायनिर्णयव्याख्या श्रीआनन्दज्ञानप्रणीता ।**

अध्यस्ताध्यमपूर्वमर्थधिषणैर्ग्राह्यं पुमर्थास्पदं लक्ष्यं लक्षणभेदनः श्रुतिगतं निर्धूतसाध्यार्थकम् ।
आम्नायान्तविभातविश्वविभवं सर्वाविरुद्धं परं सत्यं ज्ञानमनर्थमार्थविधुरं ब्रह्म प्रपद्ये सदोम् ॥ १ ॥
यो लोकं सकलं पुनाति निगमा यं प्राहुरेकान्ततो व्याप्तं येन जगज्जगन्ति सततं यस्मै नमस्कुर्वते ।
यस्मादाविरभूदशेषममरा यस्य प्रसादार्थिनो यस्मिन्पर्यवसास्यति स्फुरदिदं तस्मै नमो विष्णवे ॥ २ ॥
योऽनुग्रानुग्रतेजा जनयति सकलानालयं यं लभन्ते सर्वे निर्वान्ति येन श्रुतिपथपथिका वौषडानन्वते च ।
यस्मै यस्मादकस्मात्परिभवचकिता यस्य संरोचयन्ते चिन्ता यस्मिन्प्रवृत्ता भृशविशदधियः संश्रये तं गिरीशम् ॥ ३ ॥
भिन्दानमेनांसि दुरासदानि प्रत्यूहवर्गप्रभवानि तानि । राजानमाधातपरंपराणामारादुपासे गिरिजाभिजातम् ॥ ४ ॥
श्रीमद्व्यासपयोनिधिर्निधिरसौ सत्सूक्तिपङ्क्तिस्फुरन्मुक्तानामनवद्यहृद्यविपुलप्रद्योतिविद्यामणिः ।
क्षान्तिः शान्तिधृती दयेतिसरितामेकान्तविश्रान्तिभूर्भूयान्नः सततं मुनीन्द्रमकरश्रेणीश्रयः श्रेयसे ॥ ५ ॥
यद्भाष्याम्बुजजातजातमधुरप्रेयोमधुप्रार्थनासार्थव्यग्रधियः समग्रमरुतः स्वर्गेऽपि निर्वेदिनः ।
यस्मिन्मुक्तिपथो मुमुक्षुमुनिभिः संप्रार्थितः संबभौ तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ॥ ६ ॥
यत्पादाम्बुजचञ्चरीकधिषणा निर्वाणमार्गाधिगा पङ्क्तिर्मुक्तनिसर्गदुर्गदुरिता वाचंयमानामियम् ।
यस्मिन्नित्यमिदं शमादि समभूद्बोधाङ्कुरो मे यतः शुद्धानन्दमुनीश्वराय गुरवे तस्मै परस्मै नमः ॥ ७ ॥

---

१ मूलाविद्या, तूलाविद्येति द्वितयम् । २ स्वरूपोपमर्दनं विनान्यथाभावः ।

भाष्यरत्नप्रभा

श्रीमच्छारीरकं भाष्यं प्राप्य वाक् शुद्धिमाप्नुयात् । इति श्रमो मे सफलो गङ्गां रथ्योदकं यथा ॥ ७ ॥
यदज्ञानसमुद्भूतमिन्द्रजालमिदं जगत् । सत्यज्ञानसुखानन्तं तदहं ब्रह्म निर्भयम् ॥ ८ ॥

इह खलु 'स्वाध्यायोऽध्येतव्यः' इति नित्याध्ययनविधिनाधीतसाङ्गस्वाध्याये 'तद्विजिज्ञासस्व', 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः', 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इतिश्रवणविधिरुपलभ्यते । तस्यार्थः—अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्तव्य इति । तेन काम्येन नियमविधिनार्थोद्भिन्नात्मशास्त्रप्रवृत्तिः, वैदिकानां पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः । तत्र कश्चिदिह जन्मनि जन्मान्तरे वानुष्ठितयज्ञादिभिर्नितान्तविमलस्वान्तोऽस्य श्रवणविधेः को विषयः, किं फलं, कोऽधिकारी, कः संबन्ध इति जिज्ञासते । तं जिज्ञासुमुपलभमानो भगवान्बादरायणस्तदनुबन्धचतुष्टयं श्रवणात्मकशास्त्रारम्भप्रयोजकं न्यायेन निर्णेतुमिदं सूत्रं रचयांचकार 'अथातो ब्रह्मजिज्ञासा' इति ॥ नन्वनुबन्धजातं विधिसंनिहितार्थवादवाक्यैरेव ज्ञातुं शक्यम् । तथाहि—'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुत्या'यत्कृतकं तदनित्यं' इति न्यायवत्या 'न जायते म्रियते वा विपश्चित्', 'यो वै भूमा तदमृतमतोऽन्यदार्तम्' इत्यादिश्रुत्या च भूमात्मा नित्यस्ततोऽन्यदनित्यमज्ञानस्वरूपमिति विवेको लभ्यते । कर्मणा कृष्यादिना चितः संपादितः सस्यादिर्लोकः—भोग्य इत्यर्थः । विपश्चिन्नित्यज्ञानस्वरूपः । 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन', 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यादिश्रुत्यानात्ममात्रे देहेन्द्रियादिसकलपदार्थजाते वैराग्यं लभ्यते । परीक्ष्यानित्यत्वेन निश्चित्य, अकृतो मोक्षः कृतेन कर्मणा नास्तीति कर्मतत्फलेभ्यो वैराग्यं प्राप्नुयादित्यर्थः । 'शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्' इति श्रुत्या शमादिषट्कं लभ्यते । 'समाहितो भूत्वा' इति काण्वपाठः । उपरतिः संन्यासः । 'न स पुनरावर्तते' इति स्वयंज्योतिरानन्दात्मकमोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते । तथा च विवेकादिविशेषणवानधिकारीति ज्ञातुं शक्यम् । यथा 'य एता रात्रीरुपयन्ति' इति रात्रिसत्रविधौ 'प्रतितिष्ठन्ति' इत्यर्थवादस्थप्रतिष्ठाकामवद्वत् । तथा 'श्रोतव्यः' इत्यत्र प्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः विचारस्य वेदान्ता विषय इति शक्यं ज्ञातुम्, 'आत्मा द्रष्टव्यः' इत्यद्वैतात्मदर्शनमुद्दिश्य 'श्रोतव्यः' इति विचारविधानात् । न हि विचारः साक्षाद्दर्शनहेतुः, अप्रमाणत्वात्, अपि तु प्रमाणविषयत्वेन । प्रमाणं चाद्वैतात्मनि वेदान्ता एव, 'तं त्वौपनिषदं पुरुषं', 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति श्रुतेः । वेदान्तानां च प्रत्यग्ब्रह्मैक्यं विषयः, 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इति श्रुतेः । एवं विचारविधेः फलमपि ज्ञानद्वारा मुक्तिः, 'तरति शोकमात्मवित्', 'ब्रह्मविद्ब्रह्मैव भवति' इत्यादिश्रुतेः । तथा संबन्धोऽप्यधिकारिणा विचारस्य कर्तव्यतारूपः, फलस्य प्राप्यतारूप इति यथायोग्यं सुबोधः । तस्मादिदं सूत्रं व्यर्थमिति चेत् । न । तासामधिकार्यादिश्रुतीनां स्वार्थे तात्पर्यनिर्णायकन्यायसूत्राभावे किं विवेकादिविशेषणवानधिकारी उतान्यः, किं वेदान्ताः पूर्वतन्त्रेण गतार्था अगतार्था वा, किं ब्रह्म प्रत्यगभिन्नं

भामती

नत्वा विशुद्धविज्ञानं शंकरं करुणाकरम् । भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ ६ ॥
आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् । रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ ७ ॥

अथ यदसंदिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरः, यथा समनस्केन्द्रियसंनिकृष्टः स्फीतालोकमध्यवर्ती घटः, करटदन्ता वा, तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः । तथाहि, 'बृहत्त्वाद्बृंहणत्वाद्वात्मैव ब्रह्मेति गीयते' स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन 'अहं' इत्यसंदिग्धाविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदम् । नहि जातु कश्चिदत्र संदिग्धेऽहं वा नाहं वेति । न च विपर्यस्यति नाहमेवेति । न चाहं कृशः स्थूलो गच्छामीत्यादिदेहधर्मसामानाधिकरण्यदर्शनाद्देहालम्बनोऽयमहंकार इति सांप्रतम् । तदालम्बनत्वे हि योऽहं बाल्ये पित-

न्यायनिर्णयः

मानतोऽस्मि भवतीमथ चार्थये त्वां चेतः सरस्वति परास्य पराञ्चमर्थम् । शारीरके महदनुग्रहसंप्रसन्नमेकाग्रमस्तु वचसा सह सम्यगर्थे ८
श्रद्धाभक्ती पुरोधाय विधायागमभावनाम् । श्रीमच्छारीरके भाष्ये करिष्ये **न्यायनिर्णयम्** ॥ ९ ॥

नित्याध्ययनविध्युपादापितवेदान्तवचोभिरापाततः प्रतिपन्नं शास्त्रारम्भौपयिकमनुबन्धजातं न्यायतो निर्णेतुं भगवान्बादरायणः सूत्रितवान् 'अथातो ब्रह्मजिज्ञासा' इति तत्र प्रमातृत्वादिबन्धस्याध्यासत्वं, धर्ममीमांसया ब्रह्ममीमांसाया गतार्थताभावः, विशिष्टाधिकारिसंभवः, विषयादिसत्त्वं चेति चत्वारोऽर्थाः सूचिताः । तथाहि—सत्यत्वे बन्धस्य बद्धाबद्धयोर्जीवब्रह्मणोरैक्यानुपपत्तेः, सत्यस्य च ज्ञानादनिवृत्तेः, ज्ञानस्य चाज्ञानमात्रविरोधित्वात्, उत्तरज्ञानस्य च विरोधिगुणतया पूर्वज्ञानादिनिवर्तकत्वात्, विषयप्रयोजनसिद्धिहेतुतया बन्धस्याध्यासता सूचिता । पूर्वसिद्धत्वे वेदान्तविचारस्य विशिष्टाधिकारिणश्चाभावे तं प्रति तत्कर्तव्यतोक्तेरयोगादगतार्थत्वं विशिष्टाधिकारिसंभवश्च ध्वनितः । त्वमर्थदृष्टबन्धस्यान्यदीयज्ञानादनिवृत्तेः, तदर्थज्ञानमपि तन्निवर्तकं त्वमर्थविषयमेवेत्यर्थात्तदैक्यं विषयः सूचितः । मुमु-

१ यत्र जिज्ञास्यत्वं तत्रैव संदिग्धत्वं सप्रयोजनत्वं चेति जिज्ञास्यत्वव्यापकं संदिग्धत्वसप्रयोजनत्वे । तयोर्विरुद्धस्य तदभावस्येहोपलब्धिर्ज्ञानम् । तथाच व्यापकाभावे तद्व्याप्तजिज्ञास्यत्वाभावोऽत्रेत्यर्थः । अत्रैवं प्रयोगः—ब्रह्म मुमुक्ष्वविचार्यं तं प्रत्यसंदिग्धत्वात्, निष्प्रयोजनत्वाच्च । तथाविधकुम्भ-काकदन्तवदिति भावः । २ वृद्ध्यर्थकबृहबृंहिधातुजं ब्रह्मचितिरूपम् । बृंहणं च देहादीनां परिणमयितृत्वरूपं बोध्यम् । ३ एकार्थप्रतिपादकत्वज्ञानादित्यर्थः ।

भाष्यरत्नप्रभा

न वा, किं मुक्तिः स्वर्गादिवल्लोकान्तरं, आत्मस्वरूपा वेति संशयानिवृत्तेः । तस्मादागमवाक्यैरापाततः प्रतिपन्नाधिकार्यादिनिर्णयार्थमिदं सूत्रमावश्यकम् । तदुक्तं प्रकाशात्मश्रीचरणैः—'अधिकार्यादीनामागमिकत्वेपि न्यायेन निर्णयार्थमिदं सूत्रं' इति । येषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणेऽधिकार्यादिनिर्णयानपेक्षणात्सूत्रं व्यर्थमित्यापततीत्यलं प्रसङ्गेन ॥ तथा चास्य सूत्रस्य श्रवणविध्यपेक्षिताधिकार्यादिश्रुतिभिः स्वार्थनिर्णयायोत्थापितत्वाद्धेतुहेतुमद्भावः श्रुतिसंगतिः, शास्त्रारम्भहेत्वनुबन्धनिर्णायकत्वेनोपोद्धातत्वाच्छास्त्रादौ संगतिः, अधिकार्यादिश्रुतीनां स्वार्थे समन्वयोक्तेः समन्वयाध्यायसंगतिः, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिश्रुतीनां सर्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां विषयादौ समन्वयोक्तेः पादसंगतिः, एवं सर्वसूत्राणां श्रुत्यर्थनिर्णायकत्वाच्छ्रुतिसंगतिः, तत्तदध्याये तत्तत्पादे च समानप्रमेयत्वेन संगतिरूहनीया । प्रमेयं च कृत्स्नशास्त्रस्य ब्रह्म । अध्यायानां तु समन्वयाविरोधसाधनफलानि । तत्र प्रथमपादस्य स्पष्टब्रह्मलिङ्गानां श्रुतीनां समन्वयः प्रमेयः । द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानाम् । चतुर्थपादस्य पदमात्रसमन्वय इति भेदः । अस्याधिकरणस्य प्राथम्यान्नाधिकरणसंगतिरपेक्षिता ॥ अथाधिकरणमारच्यते—'श्रोतव्यः' इति विहितश्रवणात्मकं वेदान्तमीमांसाशास्त्रं विषयः । तत्किमारब्धव्यं न वेति विषयप्रयोजनसंभवासंभवाभ्यां संशयः । तत्र नाहं ब्रह्मेति भेदग्राहिप्रत्यक्षेण कर्तृत्वाकर्तृत्वादिविरुद्धधर्मवत्त्वलिङ्गकानुमानेन च विरोधेन ब्रह्मात्मनोरैक्यस्य विषयस्यासंभवात्, सत्यबन्धस्य ज्ञानान्निवृत्तिरूपफलासंभवाच्चानारम्भणीयमिति प्राप्ते सिद्धान्तः 'अथातो ब्रह्मजिज्ञासा' इति । अत्र श्रवणविधिसमानार्थत्वाय 'कर्तव्या' इति पदमध्याहर्तव्यम् । अध्याहृतं च भाष्यकृता 'ब्रह्मजिज्ञासा कर्तव्या' इति । तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वानन्वयात्प्रकृत्या फलीभूतं ज्ञानमजहल्लक्षणयोच्यते । प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणया । तथा च ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रस्य श्रौतोऽर्थः संपद्यते । तत्र ज्ञानस्य स्वतः फलत्वायोगात्प्रमातृत्वकर्तृत्वभोक्तृत्वात्मकानर्थनिवर्तकत्वेनैव फलत्वं वक्तव्यम् । तत्रानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याध्यस्तत्वमर्थात्सूचितम् । तच्च शास्त्रस्य विषयप्रयोजनवत्त्वसिद्धिहेतुः । तथा हि शास्त्रमारब्धव्यं, विषयप्रयोजनवत्त्वात्, भोजनादिवत् । शास्त्रं प्रयोजनवत्, बन्धनिवर्तकज्ञानहेतुत्वात्, रज्जुरियमित्यादिवाक्यवत् । बन्धो

भामती

यावन्वभवं स एव स्थाविरे प्रणप्तृननुभवामीति प्रतिसंधानं न भवेत् । नहि बालस्थविरयोः शरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत । तस्माद्येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं यथा च कुसुमेभ्यः सूत्रम् । तथा बालादिशरीरेषु व्यावर्तमानेष्वपि परं परमहंकारास्पदमनुवर्तमानं तेभ्यो भिद्यते । अपि च स्वप्नान्ते दिव्यशरीरभेदमास्थाय तदुचितान्भोगान्भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन्नाहं देवो मनुष्य एवेति देवशरीरे बाध्यमानेऽप्यहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते । अपि च योगी व्याघ्रः शरीरभेदेऽप्यात्मानमभिन्नमनुभवतीति नाहंकारालम्बनं देहः । अत एव नेन्द्रियाण्यप्यस्यालम्बनम्, इन्द्रियभेदेऽपि योऽहमद्राक्षं स एवैतर्हि स्पृशामीत्यहमालम्बनस्य प्रत्यभिज्ञानात् । विषयेभ्यस्त्वस्य विवेकः स्थवीयानेव । बुद्धिमनसोश्च करणयोरहमिति कर्तृप्रतिभासप्रख्यानालम्बनत्वायोगः । कृशोऽहमन्धोऽहमित्यादयश्च प्रयोगा असत्यप्यभेदे कथंचिन्मञ्चाः क्रोशन्तीत्यादिवदौपचारिका इति युक्तमुत्पश्यामः । तस्मादिदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो

न्यायनिर्णयः

क्षोरथशब्दद्योतितस्य ज्ञानाय विचारविधानात्तत्साध्यज्ञानान्मुक्तिः सूचिता । ब्रह्मज्ञानाय च विचारविधानाद्ब्रह्मणः शक्यप्रतिपाद्यतया वेदान्तैः संबन्धोऽपि दर्शितः । तदेतद्भाष्यकृद्यथाक्रमं व्युत्पादयिष्यति । अस्य चाधिकरणस्य प्राथम्यान्नाधिकरणसंगतिः । उत्तराधिकरणसंगतिस्तु तस्यैवानेनेति नास्योच्यते । विचारविध्यपेक्षितविषयाद्यर्पकश्रुतिभिरस्योत्थानादुत्थाप्योत्थापकत्वं श्रुतिसंगतिः । इदं च धर्मजिज्ञासासूत्रवदुपोद्धाततया 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं प्रचक्षते' इति न्यायेन शास्त्रेण संबध्यते । विचारारम्भोपयोगिनामधिकार्यादिश्रुतीनां स्वार्थे समन्वयोक्तेरस्य विशेषतः समन्वयाध्यायसंगतिः । स्पष्टब्रह्मलिङ्गानां विषयाद्यर्पकवाक्यानां स्वार्थे समन्वयोक्त्या विशेषतोऽस्याद्यपादेन संबन्धः । पूर्वपक्षे विचारानारम्भात्तदधीनज्ञानाभावादुपायान्तरसाध्या मुक्तिः । सिद्धान्ते तु तदारम्भसंभवात्तदधीनज्ञानसिद्धेस्तेनैव मुक्तिः सिध्यतीति फलभेदः । तच्चेदमधीतिविधिवदन्तर्भूतमेव शास्त्रे तदारम्भकार्यतापरम् । तत्र वेदान्तमीमांसाशास्त्रं विषयस्तदारभ्यमनारभ्यं वेति विषयाद्यसंभवसंभवाभ्यां संशयः । प्रामाणिकत्वेन प्रमातृत्वादिबन्धस्य सत्यतया तत्त्वज्ञानानपोह्यत्वात्, बद्धाबद्धयोर्जीवब्रह्मणोरैक्यायोगात्, तदभावे च बन्धाध्वस्तेः बन्धाध्वस्तौ च फलाभावात्, प्राच्या च मीमांसया वेदार्थमात्रोपाधौ प्रवृत्तया गतार्थत्वात्, फलेच्छावतोऽधिकारिणोऽपि तुच्छत्वात्, तद्विशेषणानां च दुर्वचत्वात्, ब्रह्मणः प्रसिद्धत्वे विषयप्रयोजनयोरनुपपत्तेः, अप्रसिद्धत्वे संबन्धप्रयोजनयोरसिद्धेः, तस्य च निःसामान्यविशेषत्वात्, असंभावितविषयादिकमनारभ्यं शास्त्रमिति पूर्वपक्षः । प्रमातृत्वादेर्व्यावहारिकमानसिद्धत्वेऽपि तात्त्विकमानासिद्धतया तथाविधमानजनितबोधबाधाविरोधादुक्तविषयादिप्रतिलम्भात्, धर्ममीमांसायाश्च वेदार्थैकदेशधर्ममात्रोपहिततया

१ पूर्वानुभूतस्य साक्षात्कृतव्यक्त्यैक्यावगाहिनी धीः । २ अणिमादिसिद्धिलाभाद्दीलार्थं योगमहिम्ना व्याघ्रशरीरं कृत्वा तदाभिमानीत्यर्थः । अत्रेदं बोध्यम्—अवयवोपचयापचयात्मके बाल्ये स्थाविरे वा न शरीरभेदः सिद्ध्यति, शरीरमिति बुद्धेरनुगतत्वादित्यरुच्या 'स्वप्नान्ते' इत्युदाहृतम् । स्वप्नभ्रमवादिनां मते तद्सिद्ध्या योगिव्याघ्रदृष्टान्तः, जाग्रत्यपि दर्शयितुं वेति बोध्यम् । ३ मञ्चस्थानं शब्दः । करणानां कर्तृपदवाच्यत्वानुपपत्तेरिति भावः । ४ आत्मा शरीरादिभ्यो भिन्न इत्यधस्तादवस्थापितत्वात्तदनुपपत्तेर्लक्षणाश्रयणीयेति भावः ।

**युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ**

भाष्यरत्नप्रभा

ज्ञाननिवर्त्योऽध्यस्तत्वात्, रज्जुसर्पवत् । इति प्रयोजनसिद्धिः । एवमर्थाद्ब्रह्मज्ञानाज्जीवगतानर्थभ्रमनिवृत्तिं फलं सूत्रयञ्जीवब्रह्मणोरैक्यं विषयमप्यर्थात्सूचयति, अन्यज्ञानादन्यत्र भ्रमानिवृत्तेः । जीवो ब्रह्माभिन्नः, तज्ज्ञाननिवर्त्याध्यासाश्रयत्वात् । यदित्थं तत्तथा, यथा शुक्त्यभिन्न इदमंश इति विषयसिद्धिहेतुरध्यासः । इत्येवं विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति । अत्र पूर्वपक्षे बन्धस्य सत्यत्वेन ज्ञानादनिवृत्तेरुपायान्तरसाध्या मुक्तिरिति फलम् । सिद्धान्ते ज्ञानादेव मुक्तिरिति विवेकः । इति सर्वं मनसि निधाय ब्रह्मसूत्राणि व्याख्यातुकामो भगवान् भाष्यकारः सूत्रेण विचारकर्तव्यतारूपश्रौतार्थान्यथानुपपत्त्यार्थात्सूत्रितं विषयप्रयोजनवत्त्वमुपोद्घातत्वात्तत्सिद्धिहेत्वध्यासाक्षेपसमाधानभाष्याभ्यां प्रथमं वर्णयति—**युष्मदस्मत्प्रत्ययगोचरयोरिति** । एतेन सूत्रार्थास्पर्शित्वादध्यासग्रन्थो न भाष्यमिति निरस्तम्, आर्थिकार्थस्पर्शित्वात् ॥ यत्तु मङ्गलाचरणाभावादव्याख्येयमिदं भाष्यमिति तन्न । 'सुतरामितरेतरभावानुपपत्तिः' इत्यन्तभाष्यरचनार्थं तदर्थस्य सर्वोपप्लवरहितस्य विज्ञानघनप्रत्यगर्थस्य तत्त्वस्य स्मृतत्वात् । अतो निर्दोषत्वादिदं भाष्यं व्याख्येयम् ॥ लोके शुक्ताविदं रजतमिति भ्रमः, सत्यरजते इदं रजतमित्यधिष्ठानसामान्यारोप्यविशेषयोरैक्यप्रमाहितसंस्कारजन्यो दृष्ट इत्यत्राप्यात्मन्यनात्माहंकाराध्यासे पूर्वप्रमा वाच्या, सा चात्मानात्मनोर्वास्तवैक्यमपेक्षते, न हि तदस्ति । तथा हि—आत्मानात्मानावैक्यशून्यौ, परस्परैक्यायोग्यत्वात्, तमःप्रकाशवत् । इति मत्वा हेतुभूतं विरोधं वस्तुतः प्रतीतितो व्यवहारतश्च साधयति—**युष्मदस्मत्प्रत्ययगोचरयोरिति** । न च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण 'प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ स्तः' इति विधानात्, त्वदीयं मदीयं त्वत्पुत्रो मत्पुत्र इतिवत् 'त्वन्मत्प्रत्ययगोचरयोः' इति स्यादिति वाच्यम् । 'त्वमावेकवचने' इत्येकवचनाधिकारात् । अत्र च युष्मदस्मदोरेकार्थवा-

भामती

व्यावृत्तः, स्फुटतराहमनुभवगम्य आत्मा संशयाभावादजिज्ञास्य इति सिद्धम् । अप्रयोजनत्वाच्च । तथाहि—संसारनिवृत्तिरपवर्ग इह प्रयोजनं विवक्षितम् । संसारश्चात्मयाथात्म्याननुभवनिमित्त आत्मयाथात्म्यज्ञानेन निवर्तनीयः । स चेदयमनादिरनादिनात्मयाथात्म्यज्ञानेन सहानुवर्तते कुतोऽस्य निवृत्तिरविरोधात् कुतश्चात्मयाथात्म्याननुभवः, नह्यहमित्यनुभवादन्यदात्मयाथात्म्यज्ञानमस्ति । न चाहमिति सर्वजनीनस्फुटतरानुभवसमर्थित आत्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्यन्यथयितुम्, अनुभवविरोधात् । नह्यागमाः सहस्रमपि घटं पटयितुमीशते । तस्मादनुभवविरोधादुपचरितार्था एवोपनिषद इति युक्तमुत्पश्याम इत्याशयवानाशङ्क्य परिहरति—**युष्मदस्मत्प्रत्ययगोचरयोरिति** । अत्र च युष्मदस्मदित्यादिर्मिथ्याभवितुं युक्तमित्यन्तः शङ्काग्रन्थः । तथापीत्यादिपरिहारग्रन्थः । तथापीत्यभिसंबन्धाच्छङ्कायां यद्यपीति पठितव्यम् । इदमस्मत्प्रत्ययगोचरयोरिति वक्तव्ये युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम् । यथा ह्यहंकारप्रतियोगी त्वंकारो नैवमिदंकारः, एते वयमिमे वयमास्महे इति बहुलं प्रयोगदर्शनादिति । चित्स्वभाव आत्मा विषयी, जडस्वभावा बुद्धीन्द्रियदेहविषया विषयाः । एते हि चिदात्मानं विसिन्वन्ति अवबध्नन्ति । स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत् । परस्परानध्यासहेतावत्यन्तवैलक्षण्ये दृष्टान्तः 'तमःप्रकाशवदिति' । नहि जातु कश्चित्समुदाचरद्वृत्तिनी प्रकाशतमसी परस्परात्मतया प्रतिपत्तुमर्हति । तदिदमुक्तम्—**इतरेतरभावानुपपत्ताविति** । इतरेतरभाव इतरेतरत्वम् । तादात्म्यमिति यावत् तस्यानुपपत्ताविति । स्यादेतत् । माभूद्धर्मिणोः परस्पर-

न्यायनिर्णयः

ब्रह्मास्पर्शितया तन्मीमांसया गतार्थतानवकाशात्, अध्यक्षाद्यधिगतमिथ्याभावस्य बन्धस्य ज्ञाननिवर्त्यतया तन्निवृत्तिकामस्याधिकारिणः सुलभत्वात्, विशेषणानां च विवेकादीनामतीते वर्तमाने वा जन्मनि कृतसुकृतजनितचित्तप्रसादासादितानामनुमानागमाधीनतया सुवचत्वात्, ब्रह्मणश्च ब्रह्मपदादात्मत्वाच्च सिद्धावपि विचारं विना मानादसिद्धेः, अनन्यलभ्यतया विषयत्वात्, तदवगतेश्च फलत्वात्, अत्यन्तासिद्ध्यभावाच्च, शक्यप्रतिपाद्यतया संबन्धादिसिद्धेरारोपितसामान्यविशेषभावमादाय तदीयविषयत्वस्य प्रतिपाद्यत्वात् उक्तविषयादिमदिदं शास्त्रमारभ्यमिति सिद्धान्तः । तदिदं हृदि निधाय वेदान्तमीमांसाशास्त्रं व्याख्यातुकामो भगवान्भाष्यकारः शास्त्रारम्भार्थमाद्यसूत्रेणार्थतः सूचितं विषयादि वदितुं विरोधिनो बन्धस्याध्यासत्वं लक्षणसंभावनासद्भावप्रमाणैः सिषाधयिषुरादावध्यासमाक्षिपति—**युष्मदस्मत्प्रत्ययगोचरयोः** इत्यादिना **मिथ्येति भवितुं युक्तम्** इत्यन्तेन भाष्येण । अर्वाक् च 'सुतरामितरेतरभावानुपपत्तिः' इत्यन्तेनानुप्लुतं चिन्मात्रमात्मानमनुसंदधानस्तत्त्वानुस्मरणं मङ्गलाचरणं विघ्नोपशमनाद्यर्थं संपादयति । चैत्रे मैत्रोऽयमिति भ्रान्तिरन्यत्रैक्यप्रमित्यपेक्षा संस्कारजन्यत्वात्, तत्प्रमितिश्चैक्यकृतेत्यात्मानात्मनोरैक्याध्यासेऽपि तत्प्रमित्यादेर्वक्तव्यतां मन्वानस्तयोरैक्याभावेऽपि त्रिविधं विरोधं **हेतुमाह—युष्मदस्मत्प्रत्ययगोचरयोरिति** । न च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोरेकार्थवाचिनोर्मपर्यन्तस्य त्वमावादेशावित्युक्तत्वात्त्वत्पुत्रो मत्पुत्र इतिवत्त्वन्मत्प्रत्ययगोचरयोरिति स्यादिति युक्तम् । 'त्वमावेकवचने' इति सूत्रादेकार्थाभिधायिनोर्युष्मदस्मदोर्मपर्यन्तस्य स्थाने त्वमावादेशौ भवत इति व्याख्यानादेकवचन इत्यधिकारादत्र च युष्मदस्मदोरेकार्थवाचित्वस्याविवक्षितत्वात् ।

---

१ द्वितीयहेतुं विभजते । २ इदंशब्दस्य पराक्प्रतिपादकत्वाविशेषेऽपि एते वयमित्यादि प्रचुरप्रयोगवशान्मुख्यवद्भानं भवतीति तत्तत्र निरूढमिति भावः । ३ समुदाचरन्त्यौ भेदेन ज्ञायमाने वृत्ती वर्तने ययोस्ते तथा । अध्यासो हि विवेकाग्रहेण व्याप्तः, अत्र विवेकग्रहसत्त्वादध्यासो नोपपन्न इत्याशयः । ४ इतरस्येतरत्र भाव इति योजने सिद्धस्य संसर्गाध्यासनिषेधस्य साधनं भवेत्तदनेनापहृतं बोद्धव्यम् ।

भाष्यरत्नप्रभा

चित्त्वाभावादनात्मनां युष्मदर्थानां बहुत्वादस्मदर्थचैतन्यस्याप्युपाधितो बहुत्वात् ॥ नन्वेवं सति कथमत्र भाष्ये विग्रहः । न च यूयमिति प्रत्ययो युष्मत्प्रत्ययः, वयमिति प्रत्ययोऽस्मत्प्रत्ययस्तद्गोचरयोरिति विग्रह इति वाच्यम्, शब्दसाधुत्वेऽप्यर्थासाधुत्वात् । न ह्यहंकाराद्यनात्मनो यूयमिति प्रत्ययविषयत्वमस्तीति चेत् न । गोचरपदस्य योग्यतापरत्वात् । चिदात्मा तावदस्मत्प्रत्यययोग्यः, तत्प्रयुक्तसंशयादिनिवृत्तिफलभाक्त्वात्, 'न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्' इति भाष्योक्तेश्च । यद्यप्यहंकारादिरपि तद्योग्यस्तथापि चिदात्मनः सकाशादत्यन्तभेदसिद्ध्यर्थं युष्मत्प्रत्यययोग्य इत्युच्यते ॥ आश्रमश्रीचरणास्तु टीकायोजनायामेवमाहुः—'संबोध्यचेतनो युष्मत्पदवाच्यः, अहंकारादिविशिष्टचेतनोऽस्मत्पदवाच्यः, तथा च युष्मदस्मदोः स्वार्थे प्रयुज्यमानयोरेव त्वमादेशनियमो न लाक्षणिकयोः, 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ' इति सूत्रासांगत्यप्रसङ्गात् । अत्र शब्दलक्षकयोरिव चिन्मात्रजडमात्रलक्षकयोरपि न त्वमादेशो लक्षकत्वाविशेषात्' इति । यदि तयोः शब्दबोधकत्वे सत्येव त्वमादेशाभाव इत्यनेन सूत्रेण ज्ञापितं तदास्मिन्भाष्ये युष्मत्पदेन युष्मच्छब्दजन्यप्रत्यययोग्यः परागर्थो लक्ष्यते, अस्मच्छब्देन अस्मच्छब्दजन्यप्रत्यययोग्यः प्रत्यगात्मा । तथा च लक्ष्यतावच्छेदकतया शब्दोऽपि बोध्यत इति न त्वमादेशः । न च पराक्त्वप्रत्यक्त्वयोरेव लक्ष्यतावच्छेदकत्वं, न शब्दयोग्यत्वांशस्य, गौरवादिति वाच्यम् । पराक्प्रतीचोर्विरोधस्फुरणार्थं विरुद्धशब्दयोग्यत्वस्यापि वक्तव्यत्वात् । अतएवेदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपीदंशब्दोऽस्मदर्थे लोके वेदे च बहुशः, इमे वयमास्महे, इमे विदेहाः, अयमहमस्मीति च प्रयोगदर्शनान्नास्मच्छब्दविरोधीति मत्वा युष्मच्छब्दः प्रयुक्तः, इदंशब्दप्रयोगे विरोधास्फूर्तेः । एतेन चेतनवाचित्वादस्मच्छब्दः पूर्वं प्रयोक्तव्यः 'अभ्यर्हितं पूर्वम्' इति न्यायात्, 'त्यदादीनि सर्वैर्नित्यम्' इति सूत्रेण विहित एकशेषश्च स्यादिति निरस्तम् । 'युष्मदस्मदोः' इति सूत्र इवात्रापि पूर्वनिपातैकशेषयोरप्राप्तेः, एकशेषे विवक्षितविरोधास्फूर्तेश्च । वृद्धास्तु 'युष्मदर्थादनात्मनो निष्कृष्य शुद्धस्य चिद्धातोरध्यारोपापवादन्यायेन ग्रहणं द्योतयितुमादौ युष्मद्ग्रहणं' इत्याहुः । तत्र युष्मदस्मत्पदाभ्यां पराक्प्रत्यक्त्वेनात्मानात्मनोर्वस्तुतो विरोध उक्तः । प्रत्ययपदेन प्रतीतितो विरोध उक्तः । प्रतीयत इति प्रत्ययोऽहंकारादिरनात्मा दृश्यतया भाति । आत्मा तु प्रतीतित्वात्प्रत्ययः स्वप्रकाशतया भाति । गोचरपदेन व्यवहारतो विरोध उक्तः । युष्मदर्थः प्रत्यगात्मतिरस्कारेण कर्ताहमित्यादिव्यवहारगोचरः, अस्मदर्थस्त्वनात्मप्रविलापेन, अहं ब्रह्मेति व्यवहारगोचर इति त्रिधा विरोधः स्फुटीकृतः । युष्मच्चास्मच्च युष्मदस्मदी, ते एव प्रत्ययौ च तौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ, तयोस्त्रिधा विरुद्धस्वभावयोरितरेतरभावोऽत्यन्ताभेदस्तादात्म्यं वा तदनुपपत्तौ सिद्धायामित्यन्वयः । ऐक्यासंभवेऽपि शुक्लो घट इतिवत्तादात्म्यं किं न स्यादित्यत आह—**विषयविषयिणोरिति** । चिज्जडयोर्विषयविषयित्वाद्दीपघटयोरिव न तादात्म्यमिति भावः । युष्मदस्मदी पराक्प्रत्यग्वस्तुनी, ते एव प्रत्ययश्च गोचरश्चेति वा विग्रहः । अत्र प्रत्ययगोचरपदाभ्यामात्मानात्मनोः प्रत्यक्पराग्भावे चिदचित्त्वं हेतुरुक्तस्तत्र हेतुमाह—**विषयविषयिणोरिति** । अनात्मनो ग्राह्यत्वादचित्त्वं, आत्मनस्तु ग्राहकत्वाच्चित्त्वं वाच्यम् । अचित्त्वे स्वस्य स्वेन ग्रहस्य कर्मकर्तृत्वविरोधेनासंभवादप्रत्यक्षत्वापत्तेरित्यर्थः । यथेष्टं वा हेतुहेतुमद्भावः । नन्वेवमात्मानात्मनोः पराक्प्रत्यक्त्वेन, चिदचित्त्वेन ग्राह्यग्राहकत्वेन च विरोधात्तमःप्रकाशवदैक्यस्य तादात्म्यस्य वानुपपत्तौ सत्यां, तत्प्रमित्य-

भामती

भावस्तद्धर्माणां तु जाड्यचैतन्यनित्यत्वानित्यत्वादीनामितरेतराध्यासो भविष्यति । दृश्यते हि धर्मिणोर्विवेकग्रहणेऽपि तद्धर्माणामध्यासः; यथा कुसुमाद्भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिण्यरुणः स्फटिक इत्यारुण्यविभ्रम

न्यायनिर्णयः

युष्मदस्मद्ग्रहणाविरोधादस्मदर्थे साक्षिणि नभोवदौपाधिकं बहुत्वम् । न चैव यौष्माकीणमित्यादाविव बहुवचनमनुसृत्य विगृह्येत विरोधोक्त्यनुगुणतया यथा तथा विग्रहेऽपि निवारकाभावात् । युष्मदस्मत्पदयोश्चेतनाचेतनार्थत्वादात्मानात्मवैलक्षण्यार्थमिदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपि युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम् । न हि त्वंकारवदिदंकारस्याहंकारप्रतियोगित्वम्, एते वयमिमे वयमित्यादिप्रयोगात् । न च यूयं वयं वयमेव यूयमितिवदौपचारिकत्वम्, तत्र तथात्वाभिमानवत्प्रकृते तदभावात् । मुख्यामुख्ययोरादौ मुख्योपनिपातादस्मदर्थस्य च मुख्यत्वात्प्रथममस्मद्ग्रहणप्रसक्तावपि युष्मदर्थादनात्मनो निष्कृष्य शुद्धस्य चिद्धातोरध्यारोपापवादन्यायेन ग्रहणं द्योतयितुमादौ युष्मद्ग्रहणम् । तत्र युष्मदस्मदिति प्रत्यक्पराक्त्वेनात्मानात्मनोः स्वभावविरोधः सूच्यते । युष्मच्छब्देनाहंकारादिरस्मच्छब्देन तत्साक्षी गृह्यते । तयोरेव प्रत्ययपदेन स्फुरणतया तद्रूपत्वेन प्रतीतितो विरोधो द्योत्यते । तत्रानात्मा प्रतीतिव्याप्यत्वात्, आत्मा च प्रतीतित्वात्प्रत्ययस्तयोर्व्यवहारतो विरोधो गोचरशब्दार्थः । युष्मदर्थो हि कौटस्थ्यादिस्वभावात्मतिरस्कारेण सक्रियत्वादिनास्मदर्थोऽपि ब्रह्मास्मीत्यहंकारादिविलापेन पूर्णतया व्यवह्रियते । युष्मच्चास्मच्च युष्मदस्मदी ते एव प्रत्ययौ तावेव गोचरौ तयोस्त्रिविधविरोधभाजोरन्यत्रैक्यायोगान्न तत्प्रमितिरित्यर्थः । ऐक्यासंस्कारादतदध्यासेऽपि तादात्म्यसंस्कारादिदं रजतमितिवत्तदध्यासः स्यादित्याशङ्क्य, तस्यापि तत्प्रमितिपूर्वकत्वात्तस्याश्च तादात्म्यापेक्षत्वादात्मानात्मनोस्तदभावान्नेति मत्वा तयोस्तादात्म्याभावे हेतुमाह—**विषयविषयिणोरिति** । ऐक्याभावेऽपि जात्यादौ तादात्म्यादपौनरुक्त्यम् । नित्यानुभवविषयो युष्मदर्थो विषयो, विषयी त्वस्मदर्थो नित्यानुभवस्तयोर्ग्राह्यग्राहकवन्मिथो विरुद्ध-

**सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः। इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदा-**

भाष्यरत्नप्रभा

भावेनाध्यासाभावेऽपि तद्धर्माणां चैतन्यसुखजाड्यदुःखादीनां विनिमयेनाध्यासोऽस्त्वित्यत आह—**तद्धर्माणामपीति**। तयोरात्मानात्मनोर्धर्मास्तद्धर्मास्तेषामपीतरेतरभावानुपपत्तिः । इतरत्र धर्म्यन्तरे इतरेषां धर्माणां भावः संसर्गस्तस्यानुपपत्तिरित्यर्थः । न हि धर्मिणोः संसर्गं विना धर्माणां विनिमयोऽस्ति । स्फटिके लोहितवस्तुसांनिध्याल्लौहित्यधर्मसंसर्गः । असङ्गात्मधर्मिणः केनाप्यसंसर्गाद्धर्मिसंसर्गपूर्वको धर्मसंसर्गः कुतस्त्य इत्यभिप्रेत्योक्तम्—**सुतरामिति**। नन्वात्मानात्मनोस्तादात्म्यस्य तद्धर्मसंसर्गस्य चाभावेऽप्यध्यासः किं न स्यादित्यत आह—**इत्यत इति**। इत्युक्तरीत्या तादात्म्याद्यभावेन तत्प्रमाया अभावादतः प्रमाजन्यसंस्कारस्याध्यासहेतोरभावात् 'अध्यासो मिथ्येति भवितुं युक्तं' इत्यन्वयः । मिथ्याशब्दो द्व्यर्थः अपह्नववचनः, अनिर्वचनीयतावचनश्चेति । अत्र चापह्नवार्थः । ननु कुत्र कस्याध्यासोऽपह्नूयत इत्याशङ्क्य, आत्मन्यनात्मतद्धर्माणामनात्मन्यात्मतद्धर्माणामध्यासो निरस्यत इत्याह—**अस्मत्प्रत्ययगोचर इत्यादिना** । अहमितिप्रत्यययोग्यत्वं बुद्ध्यादेरप्यस्तीति मत्वा तत आत्मानं विवेचयति—**विषयिणीति**। बुद्ध्यादि-

भामती

इत्यत उक्तम्—**तद्धर्माणामपीति**। इतरेतरत्र धर्मिणि धर्माणां भावो विनिमयस्तस्यानुपपत्तिः । अयमभिसंधिः—रूपवद्धि द्रव्यमतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्, चिदात्मा त्वरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति । यथाहुः—'शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता' इति । तदिह पारिशेष्याद्विषयविषयिणोरन्योन्यात्मसंभेदेनैव तद्धर्माणामपि परस्परसंभेदेन विनिमयात्मना भवितव्यम्, तौ चेद्धर्मिणावत्यन्तविवेकेन गृह्यमाणावसंभिन्नौ, असंभिन्नाः सुतरां तयोर्धर्माः, स्वाश्रयाभ्यां व्यवधानेन दूरापेतत्वात् । तदिदमुक्तं—**सुतरामिति । तद्विपर्ययेणेति**। विषयविपर्ययेणेत्यर्थः । मिथ्याशब्दोऽपह्नववचनः । एतदुक्तं भवति—अध्यासो भेदाग्रहेण व्याप्तः, तद्विरुद्धश्चेहास्ति भेदग्रहः, स भेदाग्रहं निवर्तयंस्तद्व्याप्तमध्यासमपि निवर्तयतीति । मिथ्येति भवितुं युक्तं यद्यपि तथापीति योजना ॥ इदमत्राकूतम्—भवेदेतदेवं यद्यहमित्यनुभवे आत्मतत्त्वं प्रकाशेत । नत्वेतदस्ति । तथाहि—समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरससमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुतिस्मृतीतिहासपुराणेषु गीयते । न चैतान्युपक्रमपरामर्शोपसंहारैः[1] क्रियासमभिहारेणेदगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम् । अभ्यासे हि भूयस्त्वमर्थस्य भवति, यथाहो दर्शनीयाहो दर्शनीयेति न न्यूनत्वं, प्रागेवोपचरितत्वमिति । अहमनुभवस्तु प्रादेशिकमनेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मानमादर्शयन्कथमात्मतत्त्वगोचरः कथं वानुपप्लवः[2] । न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वं चेति युक्तम् । तस्यापौरुषेयतया[4] निरस्तसमस्तदोषाशङ्कस्य, बोधकतया स्वतःसिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात्[5] ।

न्यायनिर्णयः

योजातिव्यक्तित्वादेरभावान्न तादात्म्यमित्यर्थः । उक्ताद्धेतोः सिद्धमभेदासंभवं सदृष्टान्तमाह—**तमःप्रकाशवदिति**। न खल्वनयोरभेदः । न च तयोर्भावाभावत्वेन तदभावः, तमसोऽपि गुणवत्त्वादिना भावत्वात् । तथात्मानात्मनोरपि मिथो विरुद्धयोर्नाभेदोऽस्तीत्यर्थः । विमतौ नाभिन्नतया प्रमितौ मिथो विरुद्धत्वात्तमःप्रकाशवदिति । विरोधफलमाह—**इतरेतरेति**। इतरस्येतरभावो नामेतरेतरत्वमैक्यमितरसिन्नितरभावस्तादात्म्यं तयोरप्रतीतावुक्तन्यायप्रमायां तत्संस्कारासिद्धिः । नन्वात्मानात्मनोरितरेतरभावाभावेऽपि तद्धर्माणां चैतन्यजाड्यादीनामितरेतरत्र भावः स्यात् । दृश्यते हि पुष्पपुटिकादौ पुष्पाभावेऽपि तद्धर्मगन्धानुवृत्तिः । तथा चेतरेतरत्रेतरेतरधर्मप्रमित्या तत्संस्कारात्तदध्यासः सिध्यतीति । नेत्याह—**तद्धर्माणामपीति**। तयोरात्मानात्मनोर्धर्माश्चैतन्यजाड्यादयः, तेषामितरेतरत्र न भावः, मिथो विरुद्धयोर्धर्मिणोर्धर्माणामितरेतरत्र भावस्यादृष्टत्वात्, तेषां धर्मितादात्म्याच्चोक्तविरोधभाक्त्वात्, धर्मिणमतिक्रम्य च तद्धर्माणामगमनात् । नहि गन्धोऽपि विना धर्मिणं पुष्पपुटिकादौ दृश्यते, सूक्ष्मेण स्वाश्रयेण सहैवोपलम्भादन्यथा गुणत्वव्याघातात् । **उत्क्रान्त्यधिकरणे चैतद्वक्ष्यति**। तस्मात्तद्धर्माणामपि नेतरेतरत्र सत्त्वप्रमेत्यर्थः । तथाप्यात्मानात्मनोरन्योन्यात्मकताध्यासस्य च किमायातमित्याशङ्क्याह—**इत्यत इति**। इतिशब्देनाभेदप्रमित्यभावो हेतुरुक्तः । तत्फलमभेदसंस्काराभावोऽतःशब्दार्थः । यदात्मनो मुख्यं प्रत्यक्त्वं प्रतीतित्वमहंकारादिविलापनेन ब्रह्मार्थमिति व्यवहार्यत्वं नोक्तं तदयुक्तम्, अहमितिप्रतीयमानत्वादहंकारवदित्याशङ्क्य संस्काराभावफलमध्यासाभावं वक्तुमधिष्ठानस्वरूपमाह—**अस्मत्प्रत्ययगोचर इति**। अहंवृत्तिव्यङ्ग्यस्फुरणत्वं तद्वत्त्वं वा हेतुः । आद्ये साधनविकलो दृष्टान्तो, द्वितीये त्वसिद्धिः । अतोऽनुमानायोगादात्मनो युक्तं मुख्यं प्रत्यक्त्वादीत्यर्थः । यदात्मनो विषयित्वं तन्न, अनुभवामीति व्यवहृतत्वादहंकारवदित्याशङ्क्याह—**विषयिणीति**। अनुभवामीति व्यवहृतत्वं तद्वाच्यत्वं, तल्लक्ष्यत्वं वा । नाद्यः, असिद्धेः । नेतरः, हेतुवैकल्यात्।

---

१ उपक्रमः प्रारम्भः, परामर्शो मध्ये निर्देशः, उपसंहारश्च सामान्येन कथितस्य विशेषे नियमनम् । अत्रायमभिप्रायः—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' इत्युपक्रम्य, अन्नरा च तेजसा शुङ्गेन सन्मूलमन्विच्छ, अन्नेन शुङ्गेन सन्मूलमन्विच्छेत्यादि निर्दिश्य 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्युपसंहारं वाक्यं, अखण्डसत्तात्पर्यकं तदुपक्रमोपसंहारलिङ्गात् । अवान्तरपठितम् 'असद्वा इदमग्र आसीत्' इत्यादिकमेतदनुसंधानेन नेयम् । ननु तेजोबादसृष्टिक्रममपि व्याचष्टे । न । एकमद्वितीयं ब्रह्मैव प्रतिपिपादयिषितम्, यतारः शब्दः स एव तदर्थोऽन्यथातिप्रसङ्गात् । तस्मात् ब्रह्मणोऽवतारार्थं किंसिद्धान्तेऽयमिति तद्धातभिति सुवचमतो निष्प्रपञ्चात्मतत्त्वप्रतिपादकान्येवैतानीति दिक् । २ उपप्लवो विपर्यासः । अहमनुभवस्तद्रहितः कथमित्यर्थः । ३ अत्र तदपेक्षत्वं प्रत्यक्षप्रमाणसिद्धार्थानुवादकतया स्वप्रामाण्यसिद्धौ तत्प्रामाण्यमुखनिरीक्षकत्वरूपं बोध्यम् । ४ पूर्वानुपूर्व्यनपेक्षपुंविशेषबुद्धयधीनानुपूर्वीमत्त्वं पौरुषेयत्वं, तद्भिन्नत्वमित्यर्थः । ५ अनधिगताबाधितार्थबोधकत्वमेव हि प्रामाण्यं, तच्चान्तराव्यक्षं सिद्धमित्यर्थः ।

**स्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च**

भाष्यरत्नप्रभा

साक्षिणीत्यर्थः । साक्षित्वे हेतुः—**चिदात्मक इति** । अहमिति भासमाने चिदंशात्मनीत्यर्थः । **युष्मत्प्रत्ययगोचरस्येति** । त्वंकारयोग्यस्य । इदमर्थस्येतियावत् । नन्वहमिति भासमानबुद्ध्यादेः कथमिदमर्थत्वमित्यत आह—**विषयस्येति** । साक्षिभास्यस्येत्यर्थः । साक्षिभास्यत्वरूपलक्षणयोगाद्बुद्ध्यादेर्घटादिवदिदमर्थत्वं न प्रतिभासत इति भावः । अथवा यदात्मनो मुख्यं सर्वान्तरत्वरूपं प्रत्यक्त्वं प्रतीतित्वं ब्रह्मास्मीति व्यवहारगोचरत्वं चोक्तं तदसिद्धं, अहमिति प्रतीयमानत्वात्, अहंकारवदित्याशङ्क्याह—**अस्मत्प्रत्ययगोचर इति** । अस्मच्चासौ प्रत्ययश्चासौ गोचरश्च तस्मिन्नित्यर्थः । अहंवृत्तिव्यङ्ग्यस्फुरणत्वं स्फुरणविषयत्वं वा हेतुः । आद्ये दृष्टान्ते हेत्वसिद्धिः । द्वितीये तु पक्षे तदसिद्धिरित्यात्मनो मुख्यं प्रत्यक्त्वादि युक्तमिति भावः । ननु यदात्मनो विषयित्वं तदसिद्धं, अनुभवामीति शब्दवत्त्वाद्, अहंकारवदित्यत आह—**विषयिणीति** । वाच्यत्वं लक्ष्यत्वं वा हेतुः । नाद्यः, पक्षे तदसिद्धेः । नान्त्यः, दृष्टान्ते तद्वैकल्यादिति भावः । देहं जानामीति देहाहंकारयोर्विषयविषयित्वेऽपि मनुष्योऽहमित्यभेदाध्यासवदात्माहंकारयोरप्यभेदाध्यासः स्यादित्यत आह—**चिदात्मक इति** । तयोर्जाड्याल्पत्वाभ्यां सादृश्यादध्यासेऽपि चिदात्मन्यनवच्छिन्ने जडारूपाहंकारादेर्नाध्यास इति भावः । अहमिति भास्यत्वादात्मवदहंकारस्यापि प्रत्यक्त्वादिकं मुख्यमेव, ततः पूर्वोक्तपराक्त्वाद्यसिद्धिरित्याशङ्क्याह—**युष्मदिति** । अहंवृत्तिभास्यत्वमहंकारे नास्ति कर्तृकर्मत्वविरोधात्, चिद्भास्यत्वं चिदात्मनि नास्तीति हेत्वसिद्धिः । अतो बुद्ध्यादेः प्रतिभासतः प्रत्यक्त्वेऽपि पराक्त्वादिकं मुख्यमेवेति भावः । युष्मत्पराक्चासौ प्रतीयत इति प्रत्ययश्चासौ कर्तृत्वादिव्यवहारगोचरश्च तस्येति विग्रहः । तस्य हेयत्वार्थमाह—**विषयस्येति** । षिञ् बन्धने । विसिनोति बध्नाति इति विषयस्तस्येत्यर्थः । आत्मन्यनात्मतद्धर्माध्यासो मिथ्या भवतु, अनात्मन्यात्मतद्धर्माध्यासः किं न स्यात्, अहं स्फुरामि सुखीत्याद्यनुभवादित्याशङ्क्याह—**तद्विपर्ययेणेति** । तस्मादनात्मनो विपर्ययो

भामती

प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेन्न । उत्पादकाप्रतिद्वन्द्वित्वात् । न ह्यागमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति येन कारणाभावान्न भवेदपि तु तात्त्विकम् । न च तत्तस्योत्पादकम् । अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात् । तथा च वर्णे ह्रस्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः । नहि लौकिका नाग इति वा नग इति वा पदात्कुञ्जरं वा तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः । न चानन्यपरं वाक्यं स्वार्थे उपचरितार्थं युक्तम् । उक्तं हि 'न विधौ परः शब्दार्थः' इति । ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् । तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुपपत्तेः । दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षितत्वम् । तथा च पारमर्षं सूत्रं, 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' ( अ० ६ पा० ५ सू० ५४ ) इति । तथा 'पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥' इति । अपि च येऽप्यहंकारास्पदमात्मानमास्थिषत तैरप्यस्य न तात्त्विकत्वमभ्युपेतव्यम्—'अहमिहैवास्मि सदने जानानः' इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात् । उच्चतरगिरिशिखरवर्तिषु महातरुषु भूमिष्ठस्य दूर्वाप्रवालनिर्भासप्रत्ययवत् । न चेदं देहस्य प्रादेशिकत्वमनुभूयते न त्वात्मन इति सांप्रतम् । नहि तदेवं भवति–'अहम्' इति; गौणत्वे वा न–'जानानः' इति । अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तत इति यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसरः । तद्यथा नैयमिकाग्निहोत्रवचनोऽग्निहोत्रशब्दः ( अ० १ पा० ४ सू० ४ ) प्रकरणान्तरावधृतभेदे कौण्डपायिना-

न्यायनिर्णयः

अतो युक्तं विषयित्वमित्यर्थः । अहंकारस्य देहं जानामीति विषयित्वेऽपि मनुष्योऽहमित्यभेदाध्यासवदिहापि स्यादित्याशङ्क्याहंकारदेहयोर्जाड्यादिना तुल्यत्वादभेदाध्यासेऽपि चित्त्वेनात्मत्वेन वाऽजडेऽनवच्छिन्ने प्रतीचि तद्विपर्ययगताध्यासो न सिध्यतीत्याह—**चिदात्मक इति** । दीपादेर्विषयित्वेऽपि चिदात्मकत्वाभावादपुनरुक्तिः । अहमिति प्रथाविशेषादात्मवदहंकारस्यापि मुख्यप्रत्यक्त्वादियोगादयुक्तं पराक्त्वादीत्याशङ्क्याह—**युष्मदिति** । अहंकारतत्साक्षिणोरहमित्येकरूपप्रथानङ्गीकारादहंकारादेः प्रातीतिकप्रत्यक्त्वादिभावेऽपि पराक्त्वाद्येव मुख्यमित्यर्थः । अहंकारादेर्बन्धत्वेनानर्थतया हेयत्वं सूचयति—**विषयस्येति** । तस्मादध्यासो मिथ्येति संबन्धः । मा भूदात्मन्यनात्माध्यासः, तद्धर्माणां तु जाड्यादीनां तस्मिन्नध्यासः स्यादित्याशङ्क्याह—**तद्धर्माणां चेति** । न हि धर्मा धर्मिणमतिक्रमन्ते । नरविषाणा-

---

१ यत्पूर्वमुपचरितत्वमुक्तं तन्निरस्यति । २ विधायके शब्दे, परो लक्ष्यः शब्दार्थो न भवतीति शाबरभाष्ये सिद्धान्तितम् । नच 'सोमेन यजेत' इत्यादौ सोमवतेति मत्वर्थलक्षणाभ्युपगमात्, 'तत्त्वमसि' इत्यादौ च जीवब्रह्मणोरैक्यं ब्रुवतां मते भागलक्षणाङ्गीकाराच्चैतदयुक्तमिति वाच्यम् । विधितुल्यं, तत्तुल्यं वा तात्पर्यवद्वाक्यं यत्किञ्चिदनुमहार्थमन्यपरं न नेतुं शक्यमित्यर्थे तात्पर्यात् । तत्र विना तात्पर्यं सिद्धिरिष्टव्येत्याशयः । ३ शुक्तिज्ञानं रजतज्ञानापबाधात्मकं, अतो यदि नाबाधिष्यत तर्हि नोदपत्स्यतेत्यर्थः । ४ ज्योतिष्टोमेऽन्योन्यं संबध्य यज्ञशालातो निर्गच्छतामृत्विजां विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते 'यद्युद्गातापच्छिद्येतादक्षिणेन यजेत, यदि प्रतिहर्तापच्छिद्येत सर्वस्वदक्षिणेनेति' तत्रोद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासंभवात् किं पूर्वं कार्यमुत परमिति संदेहे राद्धान्तः 'पूर्वं परमजातत्वादबाधित्वैव जायते । परस्यानन्यथोत्पादान्नत्वबाधेन संभवः इति । ५ प्रकृतौ कृत्स्नोपकाराः कुशाः 'प्रकृतिवद्विकृतिः कर्तव्या' इत्यतिदेशेन प्राप्ताः पश्चादुक्तैर्निरपेक्षैः शरैर्बाध्यन्ते तद्वदित्यर्थः । ६ 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यग्निहोमे देवताप्रख्यापनादत्र अग्निहोत्रकर्मनामधेयमग्निहोत्रपदमित्यर्थः ।

**जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति' ( तैत्ति० ३।६ )। अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि ॥ २ ॥ जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं तदेव द्रढयन्नाह—**

## शास्त्रयोनित्वात् ॥ ३ ॥

न कर्तृ ब्रह्म वेदस्य किं वा कर्तृ न कर्तृ तत् । विरूपनित्यया वाचेत्येवं नित्यत्वकीर्तनात् ॥ १ ॥
कर्तृ निःश्वसितश्रुतेर्नित्यत्वं पूर्वसाम्यतः । सर्वावभासि वेदस्य कर्तृत्वात्सर्वविद्भवेत् ॥ २ ॥
अस्त्यन्यमेयताप्यस्य किं वा वेदैकमेयता । घटवत्सिद्धवस्तुत्वाद्ब्रह्मान्येनापि मीयते ॥ १ ॥
रूपलिङ्गादिराहित्यान्नास्य मान्तरयोग्यता । तं त्वौपनिषदेत्यादौ प्रोक्ता वेदैकमेयता ॥ ४ ॥

**महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य**

भाष्यरत्नप्रभा

न्तरीयवाक्यान्यप्यस्य विषय इत्याह—**अन्यान्यपीति** । एवंजातीयकत्वमेवाह—**नित्येति** । तदेवं सर्वासु शाखासु लक्षणद्वयवाक्यानि जिज्ञास्ये ब्रह्मणि समन्वितानि, तद्धिया मुक्तिरिति सिद्धम् ॥ २ ॥ यस्य निःश्वसितं वेदाः सर्वार्थज्ञानशक्तयः । श्रीरामं सर्ववेत्तारं वेदवेद्यमहं भजे ॥ १ ॥ वृत्तानुवादेन संगतिं वदन्नुत्तरसूत्रमवतारयति—**जगदिति** । चेतनस्य ब्रह्मणो जगत्कारणत्वोक्त्या सर्वज्ञत्वमर्थात्प्रतिज्ञातं सूत्रकृता, चेतनसृष्टेर्ज्ञानपूर्वकत्वात् । तथा च ब्रह्म सर्वज्ञं, सर्वकारणत्वात्, यो यत्कर्ता स तज्ज्ञः, यथा कुलाल इति स्थितम् । तदेवार्थिकं सर्वज्ञत्वं प्रधानादिनिरासाय वेदकर्तृत्वहेतुना द्रढयन्नाहेत्यर्थः । हेतुद्वयस्यैकार्थसाधनत्वात्, एकविषयत्वमवान्तरसंगतिः । यद्वा वेदस्य नित्यत्वाद्ब्रह्मणः सर्वहेतुता नास्तीत्याक्षेपसंगत्या वेदहेतुत्वमुच्यते 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः' इति वाक्यं विषयः तत्किं वेदहेतुत्वेन ब्रह्मणः सर्वज्ञत्वं साधयति उत न साधयति इति संदेहः । तत्र व्याकरणादिवद्वेदस्य पौरुषेयत्वे मूलप्रमाणसापेक्षत्वेनाप्रामाण्यापातान्न साधयतीति पूर्वपक्षे जगद्धेतोश्चेतनत्वासिद्धिः फलम् । सिद्धान्ते तत्सिद्धिः । अस्य वेदान्तवाक्यस्य स्पष्टब्रह्मलिङ्गस्य वेदकर्तरि समन्वयोक्तेः श्रुतिशास्त्राध्यायपादसंगतयः । एवमापादं श्रुत्यादिसंगतय ऊह्याः । वेदे हि सर्वार्थप्रकाशनशक्तिरुपलभ्यते, सा तदुपादानब्रह्मगतशक्तिपूर्विका तद्गता वा, प्रकाशनशक्तित्वात् । कार्यगतशक्तित्वाद्वा, प्रदीपशक्तिवदिति वेदोपादानत्वेन ब्रह्मणः स्वसंबद्धाशेषार्थप्रकाशनसामर्थ्यरूपं सर्वसाक्षित्वं सिध्यति । यद्वा यथा अध्येतारः पूर्वक्रमं ज्ञात्वा वेदं कुर्वन्ति, तथा विचित्रगुणमायासहायोऽनावृतानन्तस्वप्रकाशचिन्मात्रः परमेश्वरः स्वकृतपूर्वकल्पीयक्रमसजातीयक्रमवन्तं वेदराशिं तदर्थांश्च युगपज्जानन्नेव करोतीति न वेदस्य पौरुषेयता । यत्र ह्यर्थज्ञानपूर्वकं वाक्यज्ञानं वाक्यसृष्टौ कारणं तत्र पौरुषेयता, अत्र च यौगपद्यान्न सा, अतो वेदकर्ता वेदमिव तदर्थमपि स्वसंबद्धं नान्तरीयकतया जानातीति सर्वज्ञ इति सिद्धान्तयति—**शास्त्रेति** । शास्त्रं प्रति हेतुत्वात्, ब्रह्म सर्वज्ञं सर्वकारणं च इति संगतिद्वयानुसारेण सूत्रयोजनामभिप्रेत्य पदानि व्याचष्टे—**महत इति** । हेतोः सर्वज्ञत्वसिद्धये वेदस्य विशेषणानि । तत्र ग्रन्थतोऽर्थतश्च महत्त्वं, हितशासनात् शास्त्रत्वम् । शास्त्रशब्दः शब्दमात्रोपलक्षणार्थ इति

भामती

रज्जूपादाना हि धारा रज्ज्वां सत्यामस्ति, रज्ज्वामेव च लीयते, एवमविद्यासहितब्रह्मोपादानं जगत् जायते, ब्रह्मण्येवास्ति, तत्रैव च लीयत इति सिद्धम् ॥ २ ॥ सूत्रान्तरमवतारयितुं पूर्वसूत्रसंगतिमाह—**जगत्कारणत्वप्रदर्शनेनेति । शास्त्रयोनित्वात् ॥** न केवलं जगद्योनित्वादस्य भगवतः सर्वज्ञता, शास्त्रयोनित्वादपि बोद्धव्या । शास्त्रयोनित्वस्य सर्वज्ञतासाधनत्वं समर्थ्यते—**महत ऋग्वेदादेः शास्त्रस्येति** । चातुर्वर्ण्यस्य चातुराश्रम्यस्य च यथायथं निषेकादिश्मशानान्तासु ब्राह्ममुहूर्तो-

न्यायनिर्णयः

स्वरूपनिर्णायकमानन्दत्वविधायि वाक्यम् । ततः सत्यादिवाक्याच्च स्वप्रकाशानतिशयानन्दलक्षणं ब्रह्मेति निर्णेतुं शक्यमित्यर्थः । तैत्तिरीयश्रुताविव श्रुत्यन्तरे ब्रह्मणो लक्षणद्वयवादीनि वाक्यानि 'यः सर्वज्ञः सर्ववित्' 'विज्ञानमानन्दम्' इत्यादीनि सन्ति, तान्यपीहोदाहरणत्वेन द्रष्टव्यानीत्याह—**अन्यान्यपीति** । एवंजातीयकत्वमेवाह—**नित्येति** । तदेवं सर्वासु शाखासु लक्षणद्वयवादिवेदान्तवाक्यानि जिज्ञास्ये ब्रह्मणि समन्वितानीति तद्धिया मुक्तिरयत्नलभ्येत्यर्थः ॥ २ ॥ सूत्रान्तरमवतारयन्पूर्वसूत्रसंगतिमाह—**जगदिति** । सर्वकारणत्वं ब्रह्मलक्षणं सूत्रयता प्रधानादावतिव्याप्तिनिरासाय तद्बललब्धं सर्वज्ञत्वमर्थादुक्तं तदेवात्र साध्यते, तथा चाधिकप्रतिज्ञयास्य संगतिरित्यर्थः । वेदानां नित्यत्वात्, तदकर्तृत्वे विश्वकर्तृत्वायोगात् न तेनास्य सर्वज्ञतेत्याशङ्क्य श्रौतप्रतिज्ञयैव संगतिमाह—**तदेवेति** । वेदानां नित्यत्वेऽपि ब्रह्मणस्तत्कर्तृत्वसंभवोक्त्या तदेव जगद्धेतुत्वकृतं सर्वज्ञत्वमत्र दृढीक्रियते । तेन हेतुसाधनद्वारा तदीयसाध्यसाधनात् युक्तास्य श्रौत्या प्रतिज्ञया संगतिरिति भावः । 'अस्य महतः' इत्यादिवाक्यं ब्रह्मणो वेदकर्तृत्वेन सार्वज्ञ्यं न साधयतीति वेदस्य सापेक्षत्वप्रसङ्गाप्रसङ्गाभ्यां संदेहे, पाणिन्यादिवदर्थं दृष्ट्वा कर्तृत्वे वेदस्य पौरुषेयत्वेन सापेक्षत्वापातात् न साधयतीति प्राप्ते सिद्धान्तमाह—**शास्त्रेति** । न केवलं जगद्योनित्वादस्य सार्वज्ञ्यं किंतु शास्त्रयोनित्वादपीति योजना । अत्र च वेदकर्तृत्वोक्तेः, एतदुक्तमानमेयाङ्गीकारेण शास्त्रप्रवृत्तेः, अस्येत्यादिस्पष्टब्रह्मलिङ्गवाक्यस्य सर्वज्ञे ब्रह्मणि समन्वयोक्तेश्च श्रुत्यादिसंगतयः । फलं तु पूर्वपक्षे ब्रह्मणः सर्वज्ञत्वानिर्धारणमुत्तरत्र तन्नि-

**योनिः कारणं ब्रह्म । नहीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति, यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यमनेकशाखा-**

भाष्यरत्नप्रभा

मत्वाह—**अनेकेति** । पुराणन्यायमीमांसाधर्मशास्त्राणि शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषाणि षडङ्गानि इति दश विद्यास्थानानि वेदार्थज्ञानहेतवः । तैरुपकृतस्येत्यर्थः । अनेन मन्वादिभिः परिगृहीतत्वेन वेदस्य प्रामाण्यं सूचितम् । अबोधकत्वाभावादपि प्रामाण्यमित्याह—**प्रदीपवदिति** । सर्वार्थप्रकाशनशक्तिमत्त्वेऽप्यचेतनत्वात् सर्वज्ञकल्पत्वं योनिरुपादानं कर्तृ च । ननु सर्वज्ञस्य यो गुणः सर्वार्थज्ञानशक्तिमत्त्वं वेदस्य तदन्वितत्वेऽपि तद्योनेः सर्वज्ञत्वं कुत इत्यत आह—**न हीति** । उपादाने तच्छक्तिं विना कार्ये तदयोगाद्वेदोपादानस्य सर्वज्ञत्वम्, अनुमानं तु पूर्वं दर्शितम् । न चाविद्यायास्तदापत्तिः, शक्तिमत्त्वेऽप्यचेतनत्वादिति भावः । वेदः स्वविषयादधिकार्थज्ञानवज्जन्यः, प्रमाणवाक्यत्वात्, व्याकरणरामायणादिवदित्यनुमानान्तरम् । तत्र व्याप्तिमाह—**यद्यदिति** । विस्तरः शब्दाधिक्यम्, अनेनार्थतोऽल्पत्वं वदन् कर्तुर्ज्ञानस्यार्थाधिक्यं सूचयति, दृश्यते चार्थवादाधिक्यं वेदे । अत्रैषा योजना—यद्यच्छास्त्रं यस्मादाप्तात्संभवति स ततः शास्त्रादधिकार्थज्ञान इति प्रसिद्धं, यथा शब्दसाधुत्वादिर्ज्ञेयैकदेशोऽर्थो यस्य तदपि व्याकरणादि पाणिन्यादेरधिकार्थज्ञात्संभवति । यद्यल्पार्थमपि शास्त्रमधिकार्थज्ञात् संभवति तदा 'अस्य महतः' इत्यादिश्रुतेर्यस्मान्महतोऽपरिच्छि-

भामती

पक्रमप्रदोषपरिसमापनीयासु नित्यनैमित्तिककाम्यकर्मपद्धतिषु च ब्रह्मतत्त्वे च शिष्याणां शासनात् शास्त्रमृग्वेदादि । अत एव महाविषयत्वात् महत् । न केवलं महाविषयत्वेनास्य महत्त्वम्, अपि त्वनेकाङ्गोपाङ्गोपकरणतयापीत्याह—**अनेकविद्यास्थानोपबृंहितस्य** । पुराणन्यायमीमांसादयो दश विद्यास्थानानि तैस्तया तया द्वारोपकृतस्य । तदनेन समस्तशिष्टजनपरिग्रहेणाप्रामाण्यशङ्काप्यपाकृता । पुराणादिप्रणेतारो हि महर्षयः शिष्टास्तैस्तथा तया द्वारा वेदान्व्याचक्षाणैस्तदर्थं चादरेणानुतिष्ठद्भिः परिगृहीतो वेद इति । न चायमनवबोधको नाप्यस्पष्टबोधको येनाप्रमाणं स्यादित्याह—**प्रदीपवत्सर्वार्थावद्योतिनः** । सर्वमर्थजातं सर्वथावबोधयन् नानवबोधको नाप्यस्पष्टबोधक इत्यर्थः । अत एव **सर्वज्ञकल्पस्य**—सर्वज्ञसदृशस्य । सर्वज्ञस्य हि ज्ञानं सर्वविषयं, शास्त्रस्याप्यभिधानं सर्वविषयमिति सादृश्यम् । तदेवमन्वयमुक्त्वा व्यतिरेकमप्याह—**नहीदृशस्येति** । सर्वज्ञस्य गुणः सर्वविषयता तदन्वितं शास्त्रं, अस्यापि सर्वविषयत्वात् । उक्तमर्थं प्रमाणयति—**यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति स**—पुरुषविशेषः **ततोऽपि**—शास्त्रात् **अधिकतरविज्ञानः** इति योजना । अद्यत्वेऽप्यस्मदादिभिरत्यल्पगोचरार्थविषयं शास्त्रं विरच्यते तत्रास्माकं वक्तॄणां वाक्याज्ज्ञानमधिकविषयम् । नहि ते तेऽसाधारणधर्मा अनुभूयमाना अपि शक्या वक्तुम् । न खल्विक्षुक्षीरगुडादीनां मधुररसभेदाः शक्याः सरस्वत्याप्याख्यातुम् । विस्तरार्थमपि वाक्यं न वक्तृज्ञानेन तुल्यविषयमिति कथयितुं विस्तरग्रहणम् । सोपनयं निगमनमाह—**किमु वक्तव्यमिति** । वेदस्य यस्मात् महतो भूतात् योनेः संभवः, तस्य महतो भूतस्य ब्रह्मणो निरतिशयं

न्यायनिर्णयः

धारणमिति द्रष्टव्यम् । शास्त्रयोनित्वस्य सर्वज्ञताहेतुत्वं वक्तुं शास्त्रं विशिनष्टि—**महत इत्यादिना** । चातुर्वर्ण्यचातुराश्रम्यादिमहाविषयत्वान्महदृगादिशास्त्रम् । न केवलं महाविषयत्वेनास्य महत्त्वं किंत्वनेकाङ्गोपाङ्गोपकरणत्वाच्चेत्याह—**अनेकेति** । पुराणन्यायमीमांसाधर्मशास्त्राणि व्याकरणादिषडङ्गानि च दश विद्यास्थानानि । तैस्तद्द्वारोपकृतस्येति यावत् । एतेन शिष्टसंग्रहादप्रामाण्यशङ्कापि शास्त्रस्यार्थादपास्ता । पुराणादिप्रणेतारो महर्षयस्तथा तथा वेदान्व्याचक्षाणास्तदर्थं चादरेणानुतिष्ठन्तो वेदानादृतवन्तः, तत्कथं तदप्रामाण्यमिति भावः । अबोधित्वास्पष्टबोधित्वयोरभावादपि वेदानां प्रामाण्यमित्याह—**प्रदीपवदिति** । उक्तमुपजीव्य संबन्धोपयुक्तं विशेषणान्तरमाह—**सर्वज्ञेति** । तत्सदृशस्येति यावत् । सादृश्यं च सर्वज्ञज्ञानस्य सर्वविषयत्ववदुक्तेरपि शास्त्रस्य यथार्थत्वम् । कल्पप्रत्ययोऽचेतनत्वात् । उक्तविशेषणस्य वेदस्य निःश्वसितश्रुत्या विभक्तत्वहेतुकृतया ब्रह्म कारणमित्याह—**योनिरिति** । व्यतिरेकमुखेनोक्तं व्यक्तीकुर्वाणः सर्वज्ञत्वं प्रतिजानीते—**न हीति** । महत्त्वादिविशेषणवत्त्वमीदृशत्वम् । तस्य सर्वज्ञादन्यतोऽसंभवे हेतुं सूचयति—**सर्वज्ञेति** । तस्य गुणः सर्वार्थज्ञानवत्त्वं तेनान्वितमिदं शास्त्रं, सर्वार्थत्वात्, अतस्तस्योत्पत्तिः सर्वज्ञादेवेत्यर्थः । उक्तमनुमानीकर्तुं व्याप्तिमाह—**यदिति** । महाविषयत्वाद्वेदस्य ब्रह्मज्ञानेन तुल्यार्थत्वभ्रान्तिनिवृत्त्यर्थं विस्तरार्थमित्युक्तम् । यच्छब्दत्रयस्य स ततोऽपीत्युत्तरेण संबन्धः । शास्त्रप्रणेतुराप्तत्वार्थं पुरुषविशेषपदम् । यो यद्वाक्यप्रमाणप्रणेता स तद्विषयादधिकार्थज्ञानवानिति व्याप्तिभूमिमाह—**यथेति** । ब्रह्मणः शास्त्रकर्तृत्वेऽपि पाणिन्यादिवदसर्वज्ञत्वं शङ्कित्वोक्तम्—**ज्ञेयेति** । तस्य ज्ञेयैकदेशविषयत्वं तत्कर्तुरसार्वज्ञ्ये हेतुरित्यर्थः । अपिस्तथात्वसंभावनार्थः । यद्यस्मात्पाणिन्यादेः संभवति स तस्मादधिकार्थज्ञानवानिष्टः । शब्दस्य ज्ञानाद्यूनार्थत्वाद्यथेदं तथान्यदपि मानभूतं शास्त्रं यस्मादभियुक्तादुत्पद्यते स तस्मादधिकज्ञानवानित्यर्थः । उक्तं ज्ञानाद्यूनार्थत्वमिक्षुक्षीरादिमाधुर्यस्यावान्तरवैषम्येऽपि तदाख्यातुं सुशिक्षितोऽपि न शक्ष्यतीति न्यायसिद्धमित्याह—**इति प्रसिद्धमिति** । व्याप्तिमुक्त्वा विवक्षितमनुमानमाह—**किम्विति** । शास्त्रस्योक्त-

१ इदमिहानुमानम्—ब्रह्म वेदविषयादधिकविषयज्ञं तत्कर्तृत्वात् । यो यद्वाक्यप्रमाणकर्ता स तद्विषयादधिकविषयज्ञः यथा पाणिनिरिति ।

**भेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः संभवः, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' ( बृह० २।४।१० ) इत्यादिश्रुतेः । तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वश-**

भाष्यरत्नप्रभा

**भाज्ञूतात्तस्याद्योनेः सकाशात् अनेकशाखेत्यादिविशिष्टस्य वेदस्य पुरुषनिःश्वासवदप्रयत्नेनैव संभवः, तस्य सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति किमु वक्तव्यमिति । तत्र वेदस्य पौरुषेयत्वशङ्कानिरासार्थं श्रुतिस्थनिःश्वसितपदार्थमाह—अप्रयत्नेनेति । प्रमाणान्तरेणार्थज्ञानप्रयासं विना निमेषादिन्यायेनेत्यर्थः । अत्रानुमानेन 'यः सर्वज्ञः' इति श्रुत्युक्तसर्वज्ञत्वदार्ढ्याय पाणिन्यादिवद्वेदकर्तरि अधिकार्थज्ञानसत्तामात्रं साध्यते न त्वर्थज्ञानस्य वेदहेतुत्वं, निःश्वसितश्रुतिविरोधात्, वेदज्ञानमात्रेणाध्येतृवद्वेदकर्तृत्वोपपत्तेश्च । इयान् विशेषः—अध्येता परापेक्षः, ईश्वरस्तु स्वकृतवेदानुपूर्वीं स्वयमेव स्मृत्वा तथैव कल्पादौ ब्रह्मादिष्वाविर्भावयन् अनावृतज्ञानत्वात्तदर्थमत्यवर्जनीयतया जानातीति सर्वज्ञ इत्य-**

भामती

सर्वज्ञत्वं च सर्वशक्तित्वं च किमु वक्तव्यमिति योजना । **अनेकशाखेति** । अत्र चानेकशाखाभेदभिन्नस्य वेदस्येत्यादिः संभव इत्यन्त उपनयः । तस्येत्यादि सर्वशक्तित्वं चेत्यन्तं निगमनम् । **अप्रयत्नेनैवेति** । ईषत्प्रयत्नेन, यथाऽलवणा यवागूरिति । देवर्षयो हि महापरिश्रमेणापि यत्राशक्तास्तदयमीषत्प्रयत्नेन लीलयैव करोतीति निरतिशयमस्य सर्वज्ञत्वं सर्वशक्तित्वं चोक्तं भवति । अप्रयत्नेनास्य वेदकर्तृत्वे श्रुतिरुक्ता—'अस्य महतो भूतस्य' इति । येऽपि तावत् वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेयम् । आनुपूर्वीभेदवन्तो हि वर्णाः पदम् । पदानि चानुपूर्वीभेदवन्ति वाक्यम् । व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः, वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात् । व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या । पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता । तस्मान्नृत्तानुकरणवत् पदाद्यनुकरणम् । यथा हि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्षमाणानुकरोति नर्तकी, न तु तदेव व्यनक्ति । एवं यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवकः, न तु तामेवोच्चारयति, आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात् । तस्मान्नित्यानित्यवर्णवादिनां न लौकिकवैदिकपदवाक्यादिपौरुषेयत्वे विवादः, केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ये विप्रतिपत्तिः । यथाहुः—'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' । तत्र सृष्टिप्रलयमनिच्छन्तो जैमिनीया वेदाध्ययनं प्रत्यस्मादृशगुरुशिष्यपरंपरामविच्छिन्नामिच्छन्तो वेदमनादिमाचक्षते । वैयासिकं तु मतमनुवर्तमानाः श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेणानाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यं, पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात् । तथाहि—यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरेऽपि विपरीयन्ते । नहि जातु क्वचित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्चाश्वमेधो भवति । अग्निर्वा क्लेदयति । आपो वा दहन्ति । तद्वत् । यथात्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयानर्थहेतुः, एवं सर्गान्तरेष्वपीति तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरचयन्न स्वतन्त्रः । पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि । तच्चास्माकमपि समानमन्यत्राभिनिवेशात् । न चैकस्य प्रतिभानेऽनाश्वास इति युक्तम् । नहि बहूनामप्यज्ञानां विज्ञानां वाशयदोषवतां प्रतिभाने युक्त आश्वासः । तत्त्वज्ञानवतश्चापास्तसमस्तदोषस्यैकस्यापि प्रतिभाने युक्त एवाश्वासः । सर्गादिभुवां प्रजापतिदेवर्षीणां धर्मज्ञानवैराग्यैश्वर्यसंपन्नानामुपपद्यते तत्स्वरूपावधारणं, तत्प्रत्ययेन चार्वाचीनानामपि तत्र

न्यायनिर्णयः

विशेषणवतो यस्मान्महतो भूताद्योनेः संभवस्तस्य सर्वज्ञत्वाद्यनतिशयमिति किमु वक्तव्यमिति संबन्धः । ब्रह्म वेदार्थादधिकार्थज्ञानवत्, तत्कर्तृत्वात्, यो यद्वाक्यप्रमाणकर्ता स तदर्थादधिकार्थज्ञानवान्, यथा पाणिनिः । यद्वा वेदः स्वार्थादधिकार्थज्ञानवज्जन्यः, वाक्यप्रमाणत्वात्, पाणिन्यादिवाक्यवदित्यर्थः । शास्त्रहेतोर्ब्रह्मणः सर्वज्ञता पक्षधर्मताबलादिति वक्तुं शास्त्रस्य ग्रन्थतो महत्त्वमाह—**अनेकेति** । महाविषयत्वेनोक्तं महत्त्वं व्यनक्ति—**देवेति** । आदिशब्देन वर्णाश्रमधर्मा गृह्यन्ते । प्रदीपवत्सर्वार्थावद्योतीति इत्युक्तं प्रकृतोपयोगित्वेनार्थतोऽनुवदति—**सर्वेति** । यथोक्तं शास्त्रं ब्रह्मणो जायते चेत्तस्य पौरुषेयत्वेनानपेक्षत्वप्रामाण्यहानिरित्याशङ्क्याह—**अप्रयत्नेनेति।** पौरुषेयत्वं पुरुषनिर्वर्त्यत्वमात्रं वा नूतनानुपूर्वीरचनं वा मानान्तरदृष्टार्थोक्तिरचनं वा । नाद्यः, तवापि पदवाक्यादिषु तुल्यत्वात् । द्वितीये नूतनत्वं क्रमान्यत्वमात्रं वा विसदृशक्रमत्वं वा । नाद्यः, त्वयापि प्रतिपुरुषमुपाधिभेदादुपहितक्रमान्यत्वमात्रस्येष्टत्वात् । न द्वितीयः, मयापि क्रमवैसादृश्यस्यानिष्टत्वात् । न तृतीयः, अनङ्गीकारात् । अतो न पौरुषेयतया सापेक्षतेति भावः । अयत्नेन ब्रह्मणो वेदोत्पत्तौ मानमाह—**अस्येति** । ब्रह्मणोऽनतिशयं महत्त्वं तात्त्विकं च सर्वज्ञतासाधकं, तद्रहिते तदनुपलम्भादिति मत्वा महतो भूतस्येति पुनरुक्तम् । यथा दीपादिभासनशक्तेः स्वहेतुवह्निशक्त्यनुमापकत्वं तथा वेदगतसर्वार्थभासनशक्तेरपि स्वाश्रयोपादानस्थसर्वार्थभासनशक्त्यनुमापकतेति **समुदायार्थः । शास्त्रं शास्त्रकर्तृत्वे सत्यसर्वज्ञत्वानधिकरणकर्तृकं, कार्यत्वात्, घटवदित्यनुमानाद्वेदस्य सर्वकर्तृकतेत्युक्तम् । इदानीं**

किमस्त्वं चेति । अथवा यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः । शास्त्रमुदाहृतं पूर्वसूत्रे—'यतो वा इमानि भूतानि जायन्ते' इत्यादि । किमर्थं तर्हीदं सूत्रं, यावता पूर्वसूत्र एवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । उच्यते—तत्र पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जन्मादि केवलमनुमानमुपन्यस्तमित्याशङ्क्येत तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते, शास्त्रयोनित्वादिति ॥ ३ ॥ कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता 'आम्नायस्य

---

भाष्यरत्नप्रभा

मवद्यम् ॥ अधुना ब्रह्मणो लक्षणानन्तरं प्रमाणजिज्ञासायां वर्णकान्तरमाह—**अथवेति** । लक्षणप्रमाणयोर्ब्रह्मनिर्णयार्थत्वादेकफलकत्वं संगतिः । 'तं त्वौपनिषदं पुरुषम्' इति श्रुतिर्ब्रह्मणो वेदैकवेद्यत्वं ब्रूते न वेति संशये, कार्यलिङ्गेनैव लाघवात् कर्तुरेकस्य सर्वज्ञस्य ब्रह्मणः सिद्धेर्न ब्रूते इति प्राप्ते वेदप्रमाणकत्वात् ब्रह्मणो न प्रमाणान्तरवेद्यत्वमिति सिद्धान्तयति—**शास्त्रयोनित्वादिति** । तद्व्याचष्टे—**यथोक्तमिति** । सर्वत्र पूर्वोत्तरपक्षयुक्तिद्वयं संशयबीजं द्रष्टव्यम् । अत्र पूर्वपक्षे अनुमानस्यैव विचार्यतासिद्धिः फलं, सिद्धान्ते वेदान्तानामिति भेदः । अनुमानादिना ब्रह्मसिद्धिः पूर्वसूत्रे प्रसङ्गान्निरस्ता । किंच विचित्रप्रपञ्चस्य प्रासादादिवदेककर्तृकताबाधान्न लाघवावतारः । न च सर्वज्ञत्वात्कर्तुरेकत्वसंभवः । एकत्वज्ञानात् सर्वज्ञत्वज्ञानं ततस्तदित्यन्योन्याश्रयमभिप्रेत्याह—**शास्त्रादेवेति** । किं तच्छास्त्रमिति तदाह—**शास्त्रमिति** । पृथगारम्भमाक्षिपति—**किमर्थमिति** । येन हेतुना दर्शितं ततः किमर्थमित्यर्थः । जन्मादिलिङ्गकानुमानस्य स्वातन्त्र्येणोपन्यासशङ्कानिरासार्थं पृथक्सूत्रमित्याह—**उच्यत इति** ॥ ३ ॥ वेदान्ताः सिद्धब्रह्मपरा उत कार्यपरा इति निष्फलत्वसापेक्षत्वयोः प्रसङ्गाप्रसङ्गाभ्यां संशये पूर्वसूत्रे द्वितीयवर्णकेनाक्षेपसंगत्या पूर्वपक्षमाह—**कथं पुनरित्यादिना** । 'सदेव सोम्य' इत्यादीनां सर्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां ब्रह्मणि समन्वयोक्तेः, श्रुत्यादिसंगतयः । पूर्वपक्षे वेदान्तेषु मुमुक्षुप्रवृत्त्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति विवेकः । कथमित्याक्षेपे हेतुः—**यावतेति** ।

भामती

संप्रत्यय इत्युपपन्नं ब्रह्मणः शास्त्रयोनित्वं, शास्त्रस्य चापौरुषेयत्वं, प्रामाण्यं चेति ॥ इति प्रथमवर्णकम् ॥ वर्णकान्तरमारभते—**अथवेति** । पूर्वेणाधिकरणेन ब्रह्मस्वरूपलक्षणासंभवशङ्कां व्युदस्य लक्षणसंभव उक्तः । तस्यैव तु लक्षणस्यानेनानुमानत्वाशङ्कामपाकृत्यागमोपदर्शनेन ब्रह्मणि शास्त्रं प्रमाणमुक्तम् । अक्षरार्थस्त्वतिरोहितः ॥ ३ ॥ शास्त्रप्रमाणकत्वमुक्तं ब्रह्मणः प्रतिज्ञामात्रेण, तदनेन सूत्रेण प्रतिपादनीयमित्युत्सूत्रं पूर्वपक्षमारचयति भाष्यकारः—**कथं पुनरिति** । किमाक्षेपे । शुद्धबुद्धोदासीनस्वभावतयोपेक्षणीयं ब्रह्म, भूतमभिदधतां वेदान्तानामपुरुषार्थोपदेशिनामप्रयोजनत्वापत्तेः, भूतार्थत्वेन च प्रत्यक्षादिभिः समानविषयतया लौकिकवाक्यवत्तदर्थानुवादकत्वेनाप्रामाण्यप्रसङ्गात् । न खलु लौकिकानि वाक्यानि प्रमाणान्तरविषयमर्थमव-

न्यायनिर्णयः

जगद्धेतुत्वेन लक्षिते ब्रह्मणि मानविशेषचिन्तार्थं वर्णकान्तरमवतारयति—**अथवेति** । 'तं त्वौपनिषदम्' इत्यादि ब्रह्मणः शास्त्रैकगम्यत्वम् । समर्थयेन्न वेति कार्यलिङ्गस्य हेतुविशेषावसानानवसानाभ्यां संशये, विमतं सकर्तृकं, कार्यत्वात्, घटवदिति सिद्धे कर्तरि, तदेकत्वानेकत्वसंदेहे लाघवात्तदैक्यम् । स च शक्त्यैव सर्वं करोतीति सर्वज्ञः सर्वशक्तिश्चेत्यनुमानमेव विचार्यमिति प्राप्ते प्रत्याह—**यथोक्तमिति** । नित्यसिद्धस्य ब्रह्मणः शास्त्रं कारणमित्ययुक्तमित्याशङ्क्याह—**प्रमाणमिति** । अनुमानादपि लाघवानुगृहीताद्ब्रह्मस्वरूपधीसंभवात् तत्र शास्त्रमेव मानमित्याशङ्क्याह—**शास्त्रादिति** । न तावदप्रत्यक्षं ब्रह्म वह्निवद्विशेषतोऽनुमेयं, कार्यमात्रस्य कर्तृमात्रगमकत्वात् । न च लाघवात्तदैक्यधीः, विचित्रप्रासादादेरनेककर्तृकस्यापि दृष्टत्वेनानिर्णयात् । तथा च कर्तुर्न सर्वज्ञत्वाद्यनुमानलभ्यम् । शास्त्रे तु 'यतः' इत्येकवचनात्कर्त्रैक्यसिद्धौ सर्वज्ञत्वादिसिद्धेः शास्त्रैकगम्यं ब्रह्मेति भावः । किं तद्ब्रह्मणि प्रमाणं शास्त्रं तदाह—**शास्त्रमिति** । पूर्वसूत्रे शास्त्रस्योक्तत्वे शास्त्रयोनित्वं पृथङ् न वाच्यमिति शङ्कते—**किमर्थमिति** । एतत्सूत्रार्थवत्त्वं प्रतिजानीते—**उच्यत इति** । तत्र शास्त्रस्योक्तत्वेऽपि सूत्रे तद्वाचकाभावाज्जन्मादिलिङ्गकं स्वतन्त्रमनुमानमुक्तमिति शङ्कां निरसितुमिदं सूत्रमिति तदर्थवत्तां समर्थयते—**तत्रेति** । न च तर्हीदं पूर्वशेषतया तदन्तर्गमान्न पृथक्करणीयम् । तच्छेषत्वेऽपि सर्वज्ञत्वे शास्त्रकर्तृत्वहेतुसमर्थनन्यायभेदादधिकरणान्तरत्वसिद्धेरिति ॥ ३ ॥ वेदान्ता यथोक्ते ब्रह्मणि प्रमाणं न वेति सिद्धार्थज्ञानात्फलभावाभावाभ्यां सिद्धमर्थं रूपादिहीनं बोधयतो वाक्यस्य सापेक्षत्वानपेक्षत्वाभ्यां वा संशये पूर्वाधिकरणद्वितीयवर्णकेनाक्षेपलक्षणां संगतिं विवक्षन्नुत्तरसूत्रव्यावर्त्यपक्षमाह—**कथमिति** । 'सदेव' इत्यादितत्तदाम्नायाधीतसर्वोपनिषदां स्फुटब्रह्मलिङ्गानां ब्रह्मणि समन्वयसाधनादत्र श्रुत्यादिसंगतयः । फलं तु पूर्वपक्षे परिशुद्धब्रह्मबुद्ध्यभावात्तदर्थिनामुपनिषत्स्वप्रवृत्तिः । सिद्धान्ते शुद्धब्रह्मबुद्धिसिद्धौ मुमुक्षूणामुपनिषत्सु यत्नाधिक्यमिति विवेक्तव्यम् । कथमित्याक्षेपे हेतुर्यावतेति । 'वायुर्वै क्षेपिष्ठा देवता' इत्यादयोऽर्थवादा विध्युद्देशार्थवादयोर्मिथोपेक्षणाद्विध्युद्देशेनैकवाक्यतया धर्मे प्रमाणं न वेति संशये पूर्वपक्षयति—**आम्नायस्येति** । सर्वस्य वेदस्य विधिनिषेधार्थवादमन्त्रनामधेयात्मकस्य कार्यतच्छेषार्थताध्रौव्यात्, यानि वाक्यानि कार्यं वा तच्छेषं वा

**क्रियार्थत्वादानर्थक्यमतदर्थानाम्' ( जै० सू० १।२।१ ) इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यं, अक्रियार्थत्वात् । कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वं, उपासनादिक्रियान्तरविधानार्थत्वं वा । नहि परिनिष्ठितवस्तुप्रतिपादनं संभवति, प्रत्यक्षादि-**

भाष्यरत्नप्रभा

यतो जैमिनिसूत्रेण शास्त्रस्य वेदस्य क्रियापरत्वं दर्शितमतोऽक्रियार्थत्वाद्वेदान्तानामानर्थक्यं फलवदर्थशून्यत्वं प्राप्तमित्यन्वयः । सूत्रस्यायमर्थः—प्रथमसूत्रे तावद्वेदस्याध्ययनकरणकभावनाविधिभाव्यस्य फलवदर्थपरत्वमुक्तम् । 'चोदनालक्षणोऽर्थो धर्मः' इति द्वितीयसूत्रे धर्मे कार्ये चोदना प्रमाणमिति वेदप्रामाण्यव्यापकं कार्यपरत्वमवसितम् । तत्र 'वायुर्वै क्षेपिष्ठा' इत्याद्यर्थवादानां धर्मे प्रामाण्यमस्ति न वेति संशये आम्नायप्रामाण्यस्य क्रियार्थत्वेन व्याप्तत्वात्, अर्थवादेषु धर्मस्याप्रतीतेः, अक्रियार्थानां तेषामानर्थक्यं निष्फलार्थत्वम् । न चाध्ययनविध्युपात्तानां निष्फले सिद्धेऽर्थे प्रामाण्यं युक्तं, तस्मादनित्यमेषां प्रामाण्यमुच्यते । व्यापकाभावाद्व्याप्यं प्रामाण्यं नास्त्येवेति यावत् । एवं पूर्वपक्षेऽपि 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति सूत्रेण सिद्धान्तमाह—**क्रियापरत्वमिति** । अनित्यमिति प्राप्ते दर्शितमित्यर्थः । वायुर्वै क्षिप्रतमगामिनी देवता, तद्देवताकं कर्म क्षिप्रमेव फलं दास्यति, इत्येवं विधेयार्थानां स्तुतिरूपार्थेन द्वारेण 'वायव्यं श्वेतमालभेत' इत्यादि विधिवाक्येनैकवाक्यत्वादर्थवादाः सफलाः स्युः । स्तुतिलक्षणया सफलकार्यपरत्वात् प्रमाणमर्थवादा इति यावत् । नन्वध्ययनविधिगृहीतानां वेदान्तानामानर्थक्यं न युक्तमित्यत आह—**कर्त्रिति** । न वयं वेदान्तानामानर्थक्यं साधयामः किंतु लोके सिद्धस्य मानान्तरवेद्यत्वान्निष्फलत्वाच्च सिद्धब्रह्मपरत्वे तेषां मानान्तरसापेक्षत्वनिष्फलत्वयोः प्रसङ्गादप्रामाण्यापातात्, कार्यशेषकर्तृदेवताफलानां प्रकाशनद्वारा कार्यपरत्वं वक्तव्यमिति ब्रूमः । तत्र त्वंतत्पदार्थवाक्यानां कर्तृदेवतास्तावकत्वं, विविदिषादिवाक्यानां फलस्तावकत्वम् । ननु कर्मविशेषमनारभ्य प्रकरणान्तराधीतानां वेदान्तानां कथं तच्छेषत्वं, मानाभावादित्यरुच्या पक्षान्तरमाह—**उपासनेति** । मोक्षकामोऽसद्ब्रह्माभेदमारोप्य अहं ब्रह्मास्मीत्युपासीत इत्युपासनाविधिः, आदिशब्दाच्छ्रवणादयः । तत्कार्यपरत्वं वा वक्तव्यमित्यर्थः । ननु श्रुतं ब्रह्म विहायाश्रुतं कार्यपरत्वं किमर्थं वक्तव्यमिति तत्राह—**नहीति** ।

भामती

बोधयन्ति स्वतःप्रमाणम्, एवं वेदान्ता अपीत्यनपेक्षत्वलक्षणं प्रामाण्यमेषां व्याहन्येत । न चैतैरप्रमाणैर्भवितुं युक्तम् । न चाप्रयोजनैः, स्वाध्यायाध्ययनविध्यापादितप्रयोजनवत्त्वनियमात् । तस्मात्तत्तद्विहितकर्मापेक्षितकर्तृदेवतादिप्रतिपादनपरत्वेनैव क्रियार्थत्वम् । यदि त्वसंनिधानात्तत्परत्वं न रोचयन्ते, ततः संनिहितोपासनादिक्रियापरत्वं वेदान्तानाम् । एवं हि प्रत्यक्षाद्यनधिगतगोचरत्वेनानपेक्षतया प्रामाण्यं च प्रयोजनवत्त्वं च सिध्यतीति तात्पर्यार्थः । पारमर्षसूत्रोपन्यासस्तु पूर्वपक्षदार्ढ्याय । आनर्थक्यं चाप्रयोजनवत्त्वं, सापेक्षतया प्रमानुत्पादकत्वं, चानुवादकत्वादिति । **अतः** इत्यादि **वा**ऽन्तं ग्रहणकवाक्यम् । अस्य

न्यायनिर्णयः

नाचक्षीरन् किंतु शुद्धं सिद्धमर्थमभिदधीरन्, अनदर्थानां तेषामानर्थक्यं—फलवदभिधेयवैधुर्यमतोऽनित्यमनियतं सापेक्षमेवोच्यते वेदस्य प्रामाण्यमित्युक्तत्वात् यथा श्रुतिगृहीतानामर्थवादाना सन्तमसन्तं वा भूतमर्थं वदतां तदुक्त्यैव नैराकाङ्क्ष्यात्कार्याध्याहारासिद्धेः' 'स एवैनं भूतिं गमयति' इति विशिष्टार्थाभिधानेनैवावसानात्, 'वायव्यं श्वेतमालभेत' इत्यनेनैकवाक्यत्वाभावात्, मुख्यार्थसंभवे प्राशस्त्यलक्षणायोगात्, आख्यायिकात्मनामपि लोके शब्दानां दर्शनात् तेषां फलवदर्थावबोधानियमात्, अध्ययनविधेरक्षरावाप्त्या दृष्टार्थत्वात्, विध्युद्देशस्यापि विशिष्टार्थविधिना चरितार्थत्वात्, मिथोपेक्षाभावादर्थवादानर्थक्यात्, तत्तुल्यमन्त्रादेरपि तथात्वात्, एषां धर्मप्रमापकत्वात्, एतद्युक्तचोदनानामप्रामाण्यात्, अप्रमाणं सर्वो वेद इति प्राप्ते 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इति सूत्रेण सिद्धान्तमाह—**क्रियेति** । 'वायव्यं श्वेतमालभेत भूतिकामः' इत्येवमन्तेन विध्युद्देशेन सह 'वायुर्वै क्षेपिष्ठा' इत्याद्यर्थवादानां क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यार्थेनैकवाक्यत्वात् तत्र प्रकृतविध्यपेक्षितमर्थं वदन्तोऽर्थवादादयोऽर्थवन्तः स्युरित्युक्तः, अध्ययनविधेर्दृष्टार्थत्वात्, अक्षरावाप्तेरफलत्वात्, फलवदर्थावसायिताया वेदमात्रस्य वाच्यत्वात्, अर्थवादानां च भूतार्थवेदने फलानवसायात्, आख्यायिकात्मकलौकिकशब्दानामफलत्वस्यानिष्टत्वात् विध्याकाङ्क्षितप्राशस्त्यलक्षणया तदेकवाक्यत्वात्, विधेरेव प्रवृत्तौ प्राधान्येऽपि तदनुग्राहकतया स्तुत्यपेक्षणात् तदेकवाक्यानामर्थवादानां तथैव प्रामाण्यात् मन्त्रादेरपि स्वाध्यायविधिना फलवत्त्वसिद्धेः, विशिष्टार्थबोधिप्रधानवाक्यार्थे प्रामाण्यात् तद्युक्तचोदनानामपि तद्भावात्, युक्तं सर्वस्यैवाम्नायस्य क्रियातच्छेषविषयत्वेन प्रामाण्यम् । तदेवं पूर्वोत्तरपक्षाभ्यां शास्त्रमात्रस्य कार्यपरत्वं प्रमाणलक्षणे स्थितमित्यर्थः । तथापि वेदान्तेषु किं जातमित्याशङ्क्य यावत्तेत्यस्यापेक्षितमाह—**अत इति** । अर्थमात्रदृष्टेरानर्थक्यं फलवदभिधेयराहित्यं, अक्रियार्थत्वात् । कार्यतच्छेषवाचित्वाभावादित्यर्थः । अध्ययनविधिविरोधादानर्थक्यमयुक्तमित्याशङ्क्याह—**कर्त्रिति** । फलसंग्रहार्थमादिपदम् । उक्तं हि—'क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकाङ्क्ष्यम्' इति । कर्मप्रकरणोत्तीर्णोपनिषदां कुतस्तद्विधिशेषतेत्याशङ्क्याह—**उपासनादीति** । आदिशब्देन श्रवणादयो गृह्यन्ते । ननु वेदान्तानां न क्रियाविधिशेषत्वं, उपक्रमोपसंहारैकरूप्यादिलिङ्गैर्ब्रह्मणि तात्पर्यसिद्धेस्तत्राह—**नहीति** । मानान्तरयोग्ये ब्रह्मणि वेदान्तानां न तात्पर्यम् । तत्संवादेऽनुवादितया तद्विसंवादे च स्पर्शनधीविरोधिचित्रनिम्नोन्नतचाक्षुषधीवद्विरोधादेव तेषामतद्बोधित्वादि-

**विषयत्वात्परिनिष्ठितवस्तुनः । तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् । अत एव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं माभूदिति 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' (जै० सू० १।२।७) इति स्तावकत्वेनार्थवत्त्वमुक्तम् । मन्त्राणां च 'इषे त्वा' इत्यादीनां क्रियात-त्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम् । न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरे-**

भाष्यरत्नप्रभा

परितः समन्तान्निश्चयेन स्थितं परिनिष्ठितं कृत्यनपेक्षम् । सिद्धमिति यावत् । तस्य प्रतिपादनमज्ञातस्य वेदेन ज्ञापनं, तन्न संभवति, मानान्तरयोग्येऽर्थे वाक्यस्य संवादे सत्यनुवादकत्वात्, 'अग्निर्हिमस्य भेषजम्' इति वाक्यवत् । विसंवादे च बोधकत्वात्, 'आदित्यो यूपः' इति वाक्यवदित्यर्थः । सिद्धो न वेदार्थः, मानान्तरयोग्यत्वाद्धटवदित्युक्त्वा निष्फलत्वाच्च तथेत्याह—**तदिति** । सिद्धज्ञापने हेयोपादेयागोचरे फलाभावाच्च तन्न संभवतीत्यर्थः । फलं हि सुखावाप्तिर्दुःखहानिश्च । तच्च प्रवृत्तिनिवृत्तिभ्यां साध्यम् । ते चोपादेयस्य प्रवृत्तिप्रयत्नकार्यस्य हेयस्य निवृत्तिप्रयत्नकार्यस्य ज्ञानाभ्यां जायेते, न सिद्धज्ञानादिति भावः । तर्हि सिद्धबोधिवेदवादानां साफल्यं कथमित्याशङ्क्य 'आम्नायस्य' इत्यादिसंग्रहवाक्यं विवृणोति—**अत एवेति** । सिद्धवस्तुज्ञानात् फलाभावादेवेत्यर्थः । 'देवैर्निरुद्धः सोऽग्निररोदीत्' इति वाक्यस्याश्रुजत्वेन रजतस्य निन्दाद्वारा 'बर्हिषि न देयं' इति सफलनिषेधशेषत्ववत्, वेदान्तानां विध्यादिशेषत्वं वाच्यमित्यर्थः । ननु तेषां मन्त्रवत् स्वातन्त्र्यमस्तु नार्थवादवद्विध्येकवाक्यत्वमित्याशङ्क्य दृष्टान्तासिद्धिमाह—**मन्त्राणां चेति** । प्रथमाध्याये प्रमाणलक्षणेऽर्थवादचिन्तानन्तरं मन्त्रचिन्ता कृता—'इषे त्वा' इति मन्त्रे 'छिनद्मि' इत्यध्याहाराच्छाखाच्छेदनक्रियाप्रतीतेः, 'अग्निर्मूर्धा' इत्यादौ च क्रियासाधनदेवतादिप्रतीतेः, मन्त्राः श्रुत्यादिभिः क्रतौ विनियुक्ताः, ते किमुच्चारणमात्रेणादृष्टं कुर्वन्तः क्रतावुपकुर्वन्ति उत दृष्टेनैवार्थस्मरणेनेति संदेहे चिन्तादिनाप्यध्ययनकालावगतमन्त्रार्थस्य स्मृतिसंभवाददृष्टार्था मन्त्रा इति प्राप्ते सिद्धान्तः—'अविशिष्टस्तु वाक्यार्थः' इति लोकवेदयोर्वाक्यार्थस्याविशेषान्मन्त्रवाक्यानां दृष्टेनैव स्वार्थप्रकाशनेन क्रतूपकारकत्वसंभवात्, दृष्टे संभवति अदृष्टकल्पनानुपपत्तेः, फलवदनुष्ठानापेक्षितेन *क्रियातत्साधनस्मरणेन द्वारेण मन्त्राणां कर्माङ्गत्वम्* । '*मन्त्रैरेवार्थः स्मर्तव्यः*' इति नियमस्त्वदृष्टार्थ इति । तथा चार्थवादानां स्तुतिपदार्थद्वारा पदैकवाक्यत्वं विधिभिः, मन्त्राणां तु वाक्यार्थज्ञानद्वारा तैर्वाक्यैकवाक्यत्वमिति विभागः । नन्वस्तु कर्मप्रकरणस्थवाक्यानां विध्येकवाक्यत्वं, वेदान्तानां तु सिद्धे प्रामाण्यं किं न स्यादिति तत्राह—**न क्वचिदिति** । वेदान्ता विध्येकवाक्यत्वेनैवार्थवन्तः, सिद्धार्थावेदकत्वात्, मन्त्रार्थवादादिवदित्यर्थः । अन्यत्रादृष्टापि वेदान्तेषु कल्प्यतामिति तत्राह—**उपपन्ना वेति** । नेत्यनुषङ्गः । सिद्धे फलाभावस्योक्तत्वादिति भावः । तर्हि ब्रह्मण्येव

भामती

विभागभाष्यं **नहि** इत्यादि **उपपन्ना वा** इत्यन्तम् । *स्यादेतत् । अक्रियार्थत्वेऽपि ब्रह्मस्वरूपविधिपरा वेदान्ता भविष्यन्ति,* तथा च 'विधिना त्वेकवाक्यत्वात्—' इति राद्धान्तसूत्रमनुग्रहीष्यते । न खल्वप्रवृत्तप्रवर्तनमेव विधिः, उत्पत्तिविधेरज्ञातज्ञा-

न्यायनिर्णयः

त्यर्थः । परिनिष्ठितेऽर्थे वेदान्ताप्रामाण्ये हेत्वन्तरमाह—**तदिति** । नहि भूतार्थप्रतिपादने क्वचिद्धानमुपादानं वा, तयोः प्रवृत्तिनिवृत्त्यायत्तत्वात्, तयोश्च विधिनिषेधाधीनत्वात्, तयोरपि कार्यविषययोः सिद्धेऽर्थेऽसंभवात् । अतस्तद्वादस्याफलत्वात्फलाधीनतात्पर्याभावान्न वेदान्ता भूतेऽर्थे मानम् । न च क्रियानपेक्षं भूतं वस्तु फलं तद्धेतुर्वा, सुखदुःखाभिहानितद्धेतुत्वादृष्टेरित्यर्थः । मानान्तरसिद्धसिद्धार्थबोधित्वायोगात्तद्बोधस्य चाफलत्वात् । न चेद्वेदान्तास्तत्र प्रमाणं कथं तर्हि तेषामर्थवत्त्वमित्याशङ्क्यार्थवादाधिकरणसिद्धान्तं स्मारयति—**अत एवेति** । वेदान्तानां मन्त्रवत्पृथगर्थसंभवात् किमित्यर्थवादवद्विधिना पदैकवाक्यतेत्याशङ्क्य मन्त्रवदेव तर्हि विधिभिर्वाक्यैकवाक्यता तेषामित्याह—**मन्त्राणां चेति** । अर्थवादाधिकरणं परिसमाप्य मन्त्रेषु चिन्तावतारिना प्रमाणलक्षणे—'इषे त्वा' इत्यत्र 'छिनद्मि' इत्याध्याहारेण शाखाच्छेदप्रतीतेः 'अग्निर्मूर्धा' इत्यादौ च तद्धेतुदेवतादिदृष्टेः, 'इषे त्वा' इत्यादयो मन्त्राः श्रुत्यादिना क्रतौ विनियुक्तविषयाः । ते किमुच्चारणमात्रेणादृष्टं कुर्वन्तस्तत्रोपकुर्वन्ति आहोस्विद्दृष्टेनैवार्थप्रकाशनेनेति संशये मन्त्राणां दृष्टार्थत्वे स्वाध्यायकालसिद्धतदर्थस्य चिन्तादिना स्मृतिसंभवात्, तावन्मात्रार्थवत्तां तेषां *नित्यवदाम्नानानर्थक्यात्*, मन्त्रैरेवार्थप्रत्यायननियमात्, अदृष्टकल्पने तदुच्चारणादेव पुरुषव्यापारगोचरात्तन्नियोगविषयात्तत्कल्पनस्य युक्तत्वात् उच्चारणमात्रेणादृष्टं कुर्वन्तोऽमी क्रतावुपकुर्वन्तीति पूर्वपक्षमाह—'तदर्थशास्त्रादिति' । 'इषे त्वेति छिनत्ति' इत्यध्याहारात् क्रियोक्तिसमर्थो मन्त्रस्तत्रैवेनं मन्त्रम् 'इषे त्वेति शाखामाच्छिनत्ति' इति शास्त्रं निबध्नात्यर्थोक्त्या क्रतूपकारे तदर्थशास्त्रानर्थक्यात् । *तस्मात्तदुच्चारणमात्रेणैव क्रतावुपकारितास्येत्यर्थः* । '*मन्त्रैरेव देवतादि स्मर्तव्यम्*' इति नियमस्य दृष्टार्थाभावात्, अदृष्टार्थकल्पनेऽपि मन्त्रोच्चारणस्य तदर्थस्मारकत्वेन दृष्टार्थत्वात्, अर्थस्मृतेश्च प्रयोगार्थत्वात्, प्रयोगाच्च फलोदयात्, दृष्टे सत्यदृष्टकल्पनायोगात्, तदर्थशास्त्रस्य च परिसंख्यार्थत्वात्, दृष्टेनैवार्थप्रकाशनेन मन्त्राणां क्रतूपकारितेति सिद्धान्तमाह—'**अविशिष्टस्तु** वाक्यार्थः' इति । लोकवेदयोः शब्दानामर्थाविशेषात्, लोके फलवदुच्चारणदृष्टेः वेदेऽपि मन्त्रोच्चारणस्य तथात्वात्, अप्रकाशिते यज्ञे तदङ्गे च यागासिद्धेः, तदर्थयज्ञादिप्रकाशनेन कर्मण्युपकारो मन्त्राणामित्यर्थः । तदेवं वेदान्तानामपि मन्त्रवत्कर्मतद्धेतुवादित्वेन विधिभिर्वाक्यैकवाक्यतया कर्मसमवायित्वं सिद्धवत्कृत्य मन्त्राधिकरणं प्रवृत्तमिति भाष्यार्थः । कर्मकाण्डीयमन्त्राणां विधिभिर्वाक्यैकवाक्यत्वेऽपि प्रकरणान्तरस्थवेदान्तानां स्वार्थनिष्ठत्वेनैव प्रामाण्यमित्याशङ्क्याह—**नेति** । विधिनिषेधार्थवादमन्त्रनामधेयाधिकारान्महीतुं क्वचिदपीत्युक्तम् । अदृ-

**णार्थवत्ता दृष्टोपपन्ना वा । न च परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति, क्रियाविषयत्वाद्विधेः । तस्मात्कर्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम् । अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम् । तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते—**

## तत्तु समन्वयात् ॥ ४ ॥

वेदान्ताः कर्तृदेवादिपरा ब्रह्मपरा उत । अनुष्ठानोपयोगित्वात्कर्त्रादिप्रतिपादकाः ॥ १ ॥
भिन्नप्रकरणाल्लिङ्गषट्काच्च ब्रह्मबोधकाः । सति प्रयोजनेऽनर्थहानेऽनुष्ठानतोऽत्र किम् ॥ २ ॥
प्रतिपत्तिं विधित्सन्ति ब्रह्मण्यवसिता उत । शास्त्रत्वात्ते विधातारो मननादेश्च कीर्तनात् ॥ ३ ॥
नाकर्तृ तन्त्रेऽस्ति विधिः शास्त्रत्वं शंसनादपि । मननादेः पुराबोधाद्ब्रह्मण्यवसितास्ततः ॥ ४ ॥

**तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम्, समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य**

---

भाष्यरत्नप्रभा

स्वार्थे विधिः कल्प्यतां कृतं वेदान्तानां विध्यन्तरशेषत्वेनेत्यत आह—**न चेति** । ननु 'दध्ना जुहोति' इति सिद्धे दधनि विधिर्दृष्टस्तत्राह—**क्रियेति** । दध्नः क्रियासाधनस्य प्रयुज्यमानतया साध्यत्वाद्विधेयता, निष्क्रियब्रह्मणः कथमप्यसाध्यत्वान्न विधेयत्वमित्यर्थः । भाट्टमतमुपसंहरति—**तस्मादिति** । स्वयमेवारुचिं वदन्पक्षान्तरमाह—**अथेति** । सिद्धान्तसूत्रं व्याचष्टे—**तुशब्द इति** । तद्ब्रह्म वेदान्तप्रमाणकमिति प्रतिज्ञातेऽर्थे हेतुं पृच्छति—**कथमिति** । हेतुमाह—**समिति** । अन्वयतात्पर्यविषयत्वं तस्मादित्येव हेतुः । तात्पर्यस्य सम्यक्त्वं अखण्डार्थविषयकत्वं सूचयितुं सम्-पदं

भामती

पनार्थत्वात् । वेदान्तानां चाज्ञातं ब्रह्म ज्ञापयतां तथाभावादित्यत आह—**न च परिनिष्ठित इति** । अनागतोत्पाद्यभावविषय[1] एव हि सर्वो विधिरुपेयः, उत्पत्त्यधिकारविनियोगप्रयोगोत्पत्तिरूपाणां[2] परस्पराविनाभावात्, सिद्धे च तेषामसंभवात्, तद्वाक्यानां[3] त्वैदंपर्यं भिद्यते । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिभ्योऽधिकारविनियोगप्रयोगाणां प्रतिलम्भात्, 'अग्निहोत्रं जुहोति' इत्युत्पत्तिमात्रपरं वाक्यम् । न त्वत्र विनियोगादयो न सन्ति, सन्तोऽप्यन्यतो लब्धत्वात्केवलमविवक्षिताः । तस्मात् भावनाविषयो विधिर्न सिद्धे वस्तुनि भवितुमर्हतीति । उपसंहरति—**तस्मादिति** । अत्रारुचिकारणमुक्त्वा पक्षान्तरमुपसंहरति—**अथेति** । एवं च सत्युक्तरूपे ब्रह्मणि शब्दस्यातात्पर्यात् प्रमाणान्तरेण यादृशमस्य[4] रूपं व्यवस्थाप्यते न तच्छब्देन विरुध्यते, तस्योपासनापरत्वात्, समारोपेण चोपासनाया उपपत्तेरिति । प्रकृतमुपसंहरति—**तस्मान्नेति** । सूत्रेण सिद्धान्तयति—**एवं प्राप्त उच्यते—तत्तु समन्वयात्** ॥ तदेतत् व्याचष्टे—**तुशब्द इति** । तदित्युत्तरपक्षप्रतिज्ञां विभजते—**तद्ब्रह्मेति** । पूर्वपक्षी कर्कशाशयः पृच्छति—**कथम्** । कुतःप्रकारादित्यर्थः । सिद्धान्ती स्वपक्षे हेतुं प्रकारभेदमाह—**समन्वयात्** । सम्यगन्वयः[5] समन्वयस्तस्मात् । एतदेव विभजते—**सर्वेषु हि वेदान्तेष्विति** । वेदान्तानामैकान्तिकीं ब्रह्मपरतामाचि-

न्यायनिर्णयः

ष्टापि युक्तिवशादेष्टुं शक्येत्याशङ्क्य न हि परिनिष्ठितेत्यादिनोक्तं मत्वाह—**उपपन्ना वेति** । 'पूषा प्रपिष्टभागः' इत्यत्र यागाविनाभूतद्रव्यदेवताबुद्ध्या यागविधिकल्पनावद्वेदान्तानामपि स्वार्थे विधिं परिकल्प्यार्थवत्त्वसंभवे किं कर्मविधिशेषत्वेनेत्याशङ्क्याह—**न चेति** । 'दध्ना जुहोति' इत्यादाविव सिद्धेऽप्यर्थे विधिः स्यादित्याशङ्क्याह—**क्रियेति** । तत्र भावार्थस्यान्यतो लब्धत्वात् तदनुवादेन विधेः संक्रान्तत्वात्, विना भावार्थं शुद्धस्य सिद्धस्य विध्यविषयतेति भावः । वार्तिककारमतमुपसंहरति—**तस्मादिति** । तत्रारुचिं सूचयित्वा मतान्तरं निगमयति—**अथेत्यादिना** । मतद्वयेऽपि संमतमर्थमुपसंहरति—**तस्मान्नेति** । पूर्वपक्षमनूद्य सिद्धान्तसूत्रमवतारयति—**इति प्राप्त इति** । तत्र पूर्वपक्षप्रतिक्षेपप्रतिज्ञां व्याचष्टे—**तुशब्द इति** । तत्पदोपात्तां सिद्धान्तप्रतिज्ञां विभजते—**तद्ब्रह्मेति** । पूर्वसूत्रयोरुक्तं मेयभूतं ब्रह्म स्मारयितुं विशेषणानि । ननु वेदान्तवाक्यस्य लौकिकवाक्यवत् वाक्यत्वादेव संसृष्टार्थत्वात्, अखण्डैकरसे ब्रह्मणि कथं प्रथाहेतुतेति पृच्छति—**कथमिति** । अपर्यायानेकशब्दानामखण्डार्थत्वस्य प्रकृष्टप्रकाशादिवाक्ये दृष्टत्वात्, अस्यापि ब्रह्मस्वरूपमात्रबोधनप्रवृत्तस्य तद्धीहेतुता युक्तेति हेतुमादत्ते—**समन्वयादिति** । हेतुं विवृणोति—**सर्वेष्विति** । वेदान्तानामैकान्तिकीं ब्रह्मपरतां वक्तुं बहूनि

---

१ अनागतेति—अनागतत्वादुत्पाद्यः, भावः—भावना तद्विषयो विधिः । २ अधिकारः—फलसंबन्धबोधनं, विनियोगः—क्रियायाः फलशेषत्वज्ञापनं, प्रयोगः—अनुष्ठापनं, उत्पत्तिः—कर्मस्वरूपज्ञानम् । एतेषां हि परस्परमविनाभावोऽस्ति, यस्मात् फलसबन्धः क्रियायाः शेषत्वमन्तरेण न संभवति, शेषत्वं च नानुष्ठानमन्तरा, तच्च नाज्ञानत इति । सिद्धं चेत्पुंव्यापारानपेक्षं फलमारभेत सदारभेतेत्यसंभवस्तेषामित्यर्थः । ३ ननु अधिकारादिविधीनां परस्परमविनाभावे कथमवान्तरभेद इति चेत्तत्राह—तद्वाक्यानामिति । ऐदंपर्यं—तात्पर्यं, तदेव 'यथा' इत्यादिना 'अविवक्षिताः' इत्यन्तेन संदर्भेण प्रादर्शयत् । ४ यादृशं—जीवाद्भिन्नम् । ५ अन्वयस्य सम्यक्त्वं तात्पर्यरूपं बोध्यम् ।

**प्रतिपादकत्वेन समनुगतानि । सदेव सोम्येदमग्र आसीत्' । 'एकमेवाद्वितीयम्' (छान्दो० ६।२।१) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत० २।१।१) तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म सर्वानुभूः' (बृह० २।५।१९) 'ब्रह्मैवेदममृतं पुरस्तात्'**

भाष्यरत्नप्रभा

प्रतिज्ञान्तर्गतमेव । तथा चाखण्डं ब्रह्म वेदान्तजप्रमाविषयः, वेदान्ततात्पर्यविषयत्वात्, यो यद्वाक्यतात्पर्यविषयः स तद्वाक्यप्रमेयः, यथा कर्मवाक्यप्रमेयो धर्म इति प्रयोगः । वाक्यार्थस्याखण्डत्वं-असंसृष्टत्वम् । वाक्यस्य चाखण्डार्थकत्वं-स्वपदोपस्थिता ये पदार्थास्तेषां यः संसर्गस्तद्गोचरप्रमाजनकत्वम् । न चेदमप्रसिद्धम् । प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्यानां लोके लक्षणया चन्द्रादिव्यक्तिमात्रप्रमाहेतुत्वात् । सर्वपदलक्षणा चाविरुद्धा, सर्वैरर्थवादपदैरेकस्याः स्तुतेर्लक्ष्यत्वाङ्गीकारात् । तथा सत्यज्ञानादिपदैरखण्डं ब्रह्म भातीति न पक्षासिद्धिः । नापि हेत्वसिद्धिः, उपक्रमादिलिङ्गैर्वेदान्तानामद्वितीयाखण्डब्रह्मणि तात्पर्यनिर्णयात् । तत्र छान्दोग्यषष्ठे उपक्रमं दर्शयति—**सदेवेति** । उद्दालकः पुत्रमुवाच—हे सोम्य प्रियदर्शन, इदं सर्वं जगत्, अग्रे उत्पत्तेः प्राक्काले सदबाधितं ब्रह्मैवासीत् । एवकारेण जगतः पृथक्सत्ता निषिध्यते । सजातीयविजातीयस्वगतभेदनिरासार्थं 'एकमेवाद्वितीयम्' इति पदत्रयम् । एवमद्वितीयं ब्रह्मोपक्रम्य 'ऐतदात्म्यमिदं सर्वम्' इत्युपसंहरति । इदमुपक्रमोपसंहारैकरूप्यं तात्पर्यलिङ्गं, यथा 'तत्त्वमसि' इति नवकृत्वोऽभ्यासः । रूपादिहीनाद्वितीयब्रह्मणो मानान्तरायोग्यत्वादपूर्वत्वमुक्तम्—'अत्र वाव किल सत् सोम्य न निभालयसे' इति । संघाते स्थितं प्रत्यग्ब्रह्म न जानासीत्यर्थः । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति ब्रह्मज्ञानात्फलमुक्तं विदुषः । तस्य यावत्कालं देहो न विमोक्ष्यते तावदेव देहपातपर्यन्तो विलम्बः । अथ देहपातानन्तरं विद्वान् ब्रह्म संपत्स्यते । विदेहकैवल्यमनुभवतीत्यर्थः । 'अनेन जीवेनात्मनानुप्रविश्य' इत्याद्यद्वितीयज्ञानार्थोऽर्थवादः । मृदादिदृष्टान्तैः प्रकृत्यतिरेकेण विकारो नास्तीत्युपपत्तिरुक्ता । एवं षड्विधानि तात्पर्यलिङ्गानि व्यस्तानि समस्तानि वा प्रतिवेदान्तं दृश्यन्त इत्यैतरेयोपक्रमवाक्यं पठति—**आत्मा वा इति** । बृहदारण्यके मधुकाण्डोपसंहारवाक्यं सदात्मनो निर्विशेषत्वार्थमाह—**तदेतदिति** । मायाभिर्बहुरूपं तद्ब्रह्म । एतदपरोक्षम् । अपूर्वं कारणशून्यम् । अनपरं कार्यरहितम् । अनन्तरं जात्यन्तरमस्य नास्तीत्यनन्तरम् । एकरसमित्यर्थः । अबाह्यं अद्वितीयम् । तस्यापरोक्षत्वमुपपादयति—**अयमिति** । सर्वमनुभवतीति सर्वानुभूः । चिन्मात्रमित्यर्थः । ऋग्यजुःसामवाक्यान्युक्त्वा आथर्वणवाक्यमाह—**ब्रह्मैवेदमिति** । यत्पुरस्तात्पूर्वदिग्वस्तुजातमिदममब्रह्मेव विदुषां भाति तदमृतं ब्रह्मैव वस्तु इत्यर्थः । आदिपदेन 'सत्यं ज्ञानम्' इत्यादिवाक्यानि गृह्यन्ते । नन्वस्तु ब्रह्मणस्तात्पर्यविषयत्वं, वेदान्तानां कार्यमेवार्थः किं न स्यादिति

भामती

ख्यासुर्बहूनि वाक्यान्युदाहरति—**सदेवेति** । 'यतो वा इमानि भूतानि' इति तु वाक्यं पूर्वमुदाहृतं जगदुत्पत्तिस्थितिनाशकारणमिति चेह स्मारितमिति न पठितम् । येन हि वाक्यमुपक्रम्यते येन चोपसंह्रियते तदेव वाक्यार्थ इति शाब्दाः । यथोपांशुयाजवाक्येऽनूचोः पुरोडाशयोर्जामितादोपसंकीर्तनपूर्वकोपांशुयाजविधाने तत्प्रतिसमाधानोपसंहारे चापूर्वोपांशुयाजकर्मविधिपरता एकवाक्यताबलादाश्रिता, एवमत्रापि 'सदेव सोम्येदम्' इति ब्रह्मोपक्रमात् 'तत्त्वमसि' इति च जीवस्य ब्रह्मात्मनो-

न्यायनिर्णयः

वाक्यान्युदाहरति—**सदेवेत्यादिना** । सदित्यस्तितामात्रम् । एवेत्यवधारणे । किं तदवध्रियते तत्राह—**इदमिति** । यदिदं व्याकृतं जगत् तदग्रे प्रागुत्पत्तेः व्याकृतरूपत्यागेन सदेवासीत् । हे सोम्य प्रियदर्शन इति पित्रा पुत्रः संबोध्यते । स्थूलं पृथिव्यादीदं बुद्धिबोध्यं प्रागुत्पत्तेर्माभूत्, अन्यत्तु महदादिसूक्ष्ममासीदेवेति नेत्याह—**एकमिति** । कार्यं सतोऽन्यन्नासीदेवेत्यर्थः । तथापि मृदो घटाकारपरिणामयितृकुलालवज्जगन्निमित्तं सतोऽन्यदासीदित्याशङ्क्याह—**अद्वितीयमिति** । सतोऽपि चित्त्वं विना प्रधानवन्न हेतुतेत्याशङ्क्य श्रुत्यन्तरमाह—**आत्मेति** । आप्नोतीत्यात्मा मूलकारणम् । वैशब्देन प्रागवस्था स्मर्यते । इदमित्याद्युक्तार्थम् । तस्य निर्विशेषत्वार्थं श्रुत्यन्तरं पठति—**तदेतदिति** । तच्छब्देन 'इन्द्रो मायाभिः' इति प्रकृतात्मोक्तिः । विधेयं ब्रह्मापेक्ष्य नपुंसकं तदेतदेव यद्ब्रह्म तद्वा किंलक्षणं तत्राह—**अपूर्वमिति** । नास्य पूर्वं कारणमित्यपूर्वमकार्यमित्यर्थः । नास्यापरं कार्यं वास्तवमस्तीत्यनपरमकारणमित्यर्थः । नास्यान्तरं जात्यन्तरमन्तरालेऽस्तीत्यनन्तरमेकरसमित्यर्थः । तथाविधमन्यदपि तटस्थमस्तीति नेत्याह—**अबाह्यमिति** । बाह्यमस्मादनात्मभूतं नास्तीत्यद्वितीयमित्यर्थः । तस्यापरोक्षत्वमाह—**अयमिति** । तत्सिद्ध्यर्थं चित्स्वभावत्वमाह—**सर्वेति** । ब्रह्मात्मा सर्वमनुभवति चेदनुभाव्यस्य पृथक्त्वान्नाद्वैतमित्याशङ्क्याह—**ब्रह्मेति** । यत्पुरस्तात्पूर्वस्यां दिश्यब्रह्मेवाविदुषां भाति तत्सर्वमिदममृतं ब्रह्मैव वस्तुत इत्यर्थः । आदिपदेन सत्यज्ञानादिवाक्यानि गृह्यन्ते । नन्वेषां वाक्यानामर्थवादाधिकरणन्यायेन कर्मापेक्षितकर्त्रादिप्रकाशनेन

१ 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय' इत्यादिमन्त्रेण, आग्नेयाग्नीषोमीययोः पुरोडाशयोः निरन्तरयोः करणे जामि-आलस्यं भवेदिति मध्ये उपांशुयागो विधीयते । तत्र किमिदमपूर्वयागविधानमाहो 'विष्णुरुपांशु यष्टव्यः' इति पठितयागत्रयस्यानुवाद इति संशये द्रव्यदेवतयोरश्रवणात्, विधिप्रत्ययस्य चाभावादग्रेपठितयागत्रयस्यायमनुवाद इति पूर्वः पक्षः । एवं सति एकवाक्यत्वभङ्गापत्त्या, मन्त्रकाण्डे उपांशुयाजस्थाने पठितवैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्याभिस्तुल्यार्थत्वेन विकल्पमानाभिर्विष्ण्वादिदेवताध्रौवाज्यद्रव्यलाभात्, 'यजति' इति प्रथमलकारस्य विधिप्रत्ययत्वात्, अपूर्वयागविधिर्न्याय्यमिति भेदलक्षणे चिन्तितम् । 'विष्णुरुपांशु-' इत्यादयस्तु अनुवादा इति दिक् ।

**(मुण्ड० २।२।११) इत्यादीनि । नच तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषां कर्तृस्वरूपप्रतिपादनपरतावसीयते, 'तत्केन कं पश्येत्' (बृह० २।४।१३) इत्यादि क्रियाकारकफलनिराकरणश्रुतेः । न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' (छान्दो० ६।८।७)**

भाष्यरत्नप्रभा

तत्राह—**न चेति** । वेदान्तानां ब्रह्मणि तात्पर्ये निश्चीयमाने कार्यार्थत्वं न युक्तं 'यत्परः शब्दः स शब्दार्थः' इति न्यायादित्यर्थः । यदुक्तमर्थवादन्यायेन वेदान्तानां कर्त्रादिस्तावकत्वमिति तत्राह—**न च तेषामिति** । तेषां कर्मशेषस्तावकत्वं न भाति किंतु ज्ञानद्वारा कर्म तत्साधननाशकत्वमेव । तत्तत्र विद्याकाले कः कर्ता केन करणेन कं विषयं पश्येत् इति श्रुतेरित्यर्थः । अर्थवादानां तु स्वार्थे फलाभावात्स्तुतिलक्षणतेति भावः । यदुक्तं सिद्धत्वेन मानान्तरवेद्यं ब्रह्म न वेदार्थ इति तत्राह—**न च परीति** । 'तत्त्वमसि' इति शास्त्रमन्तरेणेति संबन्धः । धर्मो न वेदार्थः, साध्यत्वेन

भामती

पसंहारात् तत्परतैव वाक्यस्य । एवं वाक्यान्तराणामपि पौर्वापर्यालोचनया ब्रह्मपरत्वमवगन्तव्यम् । न च तत्परत्वस्य दृष्टस्य सति संभवेऽन्यपरताऽदृष्टा युक्ता कल्पयितुं, अतिप्रसङ्गात् । न केवलं कर्तृपरता तेषामदृष्टा, अनुपपन्ना चेत्याह—**न च तेषामिति** । सापेक्षत्वेनाप्रामाण्यं पूर्वपक्षबीजं दूषयति—**न च परिनिष्ठितवस्तुस्वरूपत्वेऽपीति** । अयमभिसंधिः—पुंवाक्यनिदर्शनेन हि भूतार्थतया वेदान्तानां सापेक्षत्वमाशङ्क्यते । तत्रैवं भवान् पृष्टो व्याचष्टाम्, किं पुंवाक्यानां सापेक्षता भूतार्थत्वेनाहो पौरुषेयत्वेन । यदि भूतार्थत्वेन ततः प्रत्यक्षादीनामपि परस्परापेक्षत्वेनाप्रामाण्यप्रसङ्गः । तान्यपि हि भूतार्थान्येव । अथ पुरुषबुद्धिप्रभवतया पुंवाक्यं सापेक्षं, एवं तर्हि तदपूर्वकाणां वेदान्तानां भूतार्थानामपि नाप्रामाण्यं, प्रत्यक्षादीनामिव नियतेन्द्रियलिङ्गादिजन्मनाम् । यद्युच्येत सिद्धं किलापौरुषेयत्वे वेदान्तानामनपेक्षतया प्रामाण्यं सिध्येत्, तदेव तु भूतार्थत्वेन न सिध्यति, भूतार्थस्य शब्दानपेक्षेण पुरुषेण मानान्तरतः शक्यज्ञानत्वाद्बुद्धिपूर्वं विरचनोपपत्तेः, वाक्यत्वादिलिङ्गकस्य वेदपौरुषेयत्वानुमानस्याप्रत्यूहमुत्पत्तेः । तस्मात् पौरुषेयत्वेन सापेक्षत्वं दुर्वारं, न तु भूतार्थत्वेन । कार्यार्थत्वे तु कार्यस्यापूर्वस्य मानान्तरागोचरतयात्यन्ताननुभूतपूर्वस्य तत्त्वेन समारोपेण वा पुरुषबुद्धावनारोहात् तदर्थानां वेदान्तानामशक्यरचनतया पौरुषेयत्वाभावादनपेक्षं प्रमाणत्वं सिध्यतीति प्रामाण्याय वेदान्तानां कार्यपरत्वमातिष्ठामहे । अत्र ब्रूमः—किं पुनरिदं कार्यमभिमतमायुष्मतः, यदशक्यं पुरुषेण ज्ञातुम् । अपूर्वमिति चेत्, हन्त कुतस्त्यमस्य लिङाद्यर्थत्वं, तेनालौकिकेन संगतिसंवेदनविरहात् । लोकानुसारतः क्रियाया एव लौकिक्याः कार्याया लिङादेरवगमात् । 'स्वर्गकामो यजेत' इति साध्यस्वर्गविशिष्टो नियोज्योऽवगम्यते, स च तदेव कार्यमवगच्छति यत्स्वर्गानुकूलम् । न च क्रिया क्षणभङ्गुरामुष्मिकाय स्वर्गाय कल्पत इति पारिशेष्याद्वेदत एवापूर्वे कार्ये लिङादीनां संबन्धग्रह इति चेत्, हन्त चैत्यवन्दनादिवाक्येष्वपि स्वर्गकामादिपदसंबन्धादपूर्वकार्यत्वप्रसङ्गः, तथा च तेषामप्यशक्यरचनत्वेनापौरुषेयत्वापातः । स्पष्टदृष्टेन पौरुषेयत्वेन वा तेषामपूर्वार्थत्वप्रतिषेधे वाक्यत्वादिना लिङ्गेन वेदानामपि पौरुषेयत्वमनुमितमित्यपूर्वार्थता न स्यात् । अन्यतस्तु वाक्यत्वादीनामनुमानाभासत्वोपपादने कृतमपूर्वार्थत्वेनात्र तदुपपादकेन । उपपादितं चापौरुषेयत्वमस्माभिर्न्यायकणिकायां, इह तु विस्तरभयान्नोक्तम् । तेनापौरुषेयत्वे सिद्धे

न्यायनिर्णयः

क्रियाविधिशेषतेत्युक्तं तत्राह—**न चेति** । 'वायुर्वै क्षेपिष्ठा' इत्यादीनामिव क्रियाविधिशेषत्वेऽपि तेषां न श्रुतहानिरश्रुतकल्पना वेत्याशङ्क्याह—**न चेति** । युक्तमर्थवादानां स्वार्थे पुमर्थहीनानामध्ययनविधेर्विध्यपेक्षितप्राशस्त्यद्वारा तच्छेषत्वम् । यथाहुः—'स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते । तद्वशेनार्थवादानां प्राशस्त्येन प्रमाणता ॥' इति वेदान्तानां तु कर्मापेक्षितकर्त्राद्यबोधित्वान्न तद्विधिशेषतेत्यर्थः । ननु पर्णताया जुहूद्वारा क्रतुशेषत्ववदात्मनोऽपि ज्ञानद्वारा कर्मशेषत्वात्, तदर्था वेदान्तास्तद्विधिशेषा भविष्यन्ति, नेत्याह—**तदिति** । तत्तत्र विद्यादशायां केन करणेन कं विषयं को वा कर्ता पश्येदित्यादिवाक्येनात्मविषया क्रियादिनिरासश्रुतेर्नासौ कर्माङ्गम् । ततो धीद्वारा आत्मनस्तद्विध्यशेषत्वात् तदर्थवेदान्तानां न तच्छेषतेत्यर्थः । यत्तु न परिनिष्ठितवस्तुप्रतिपादनं, तस्याध्यक्षादियोग्यत्वादिति तत्राह—**न चेति** । 'तत्त्वमसि' इति शास्त्रमन्तरेणेति संबन्धः । वेदान्तवेद्यस्य सिद्धत्वेऽपि मानान्तरायोग्यत्वात् तत्संवादविसं-

१ ऐतरेयके—'आत्मा वा इदमेक एवाग्र आसीत्' इत्युपक्रम्य 'प्रज्ञानं ब्रह्म' इत्युपसंहृतम् । वाजसनेयके—'अहं ब्रह्मास्मि' इत्युपक्रम्य 'अयमात्मा ब्रह्म' इत्युपसंहृतम् । आथर्वणे—'कस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति सर्वात्मकं ब्रह्मोपक्रम्य 'ब्रह्मैवेदममृतं पुरस्तात्' इति तदेवोपसंहृतम् । इत्यादीनि च वाक्यान्युदाहर्तव्यानि । २ अत्रैवं प्रयोगः—वेदान्ताः मानान्तरसापेक्षाः, सिद्धवस्तुपरत्वात्, तीरे फलानि सन्तीति पुंवाक्यवदिति । तत्र पूर्ववाद्यभिमतस्य हेतोः पौरुषेयत्वेन सोपाधिकत्वं अपिना द्योत्यत इत्याह—अयमभिसंधिरिति । ३ हेतोर्व्यभिचारित्वमाह—प्रत्यक्षादीनामपीति । ४ उपाधेः साधनव्यापकत्वं शङ्कते—यद्युच्येतेत्यादि । ५ वेदान्तवाक्यं पौरुषेयं, वाक्यत्वात्, पटमानयेति वाक्यवदित्यनुमानम् । ६ वेदान्तवाक्यकदम्बस्य कार्यपरत्वे तु न वाक्यत्वहेतुना सापेक्षत्वमनुमेयं, पौरुषेयत्वस्योपाधित्वात् । एवं हि साधनव्यापकत्वं नास्तीत्याह—कार्यार्थत्व इति । ७ अकार्ये मानान्तरायोग्यत्वस्यासिद्धत्वात्तत्परत्वेऽपि वेदान्तानां पौरुषेयत्वं संभवतीति समा साधनव्याप्तिः, ततश्च वाक्यत्वादिलिङ्गकानुमानेन पौरुषेयत्वं दुरपह्नवमित्याह—अत्र ब्रूम इति । ८ फलाभिसंधिमानित्यर्थः । ९ स्मर्यमाणकर्तृकत्वेन सोपाधिको वाक्यत्वहेतुरिति चेत् सिद्धार्थकेष्वपि वेदान्तेषु तत्सममिति कार्यार्थत्वमनपेक्षताप्रयोजकं न भवतीत्याह—अन्यतस्त्विति । १० वर्तमानसंनिकर्षजन्यप्रत्यक्षस्य कार्यरूपधर्मगोचरत्वानुपपत्तेर्न धर्मस्य प्रत्यक्षता । न चाज्ञाते पुंसा वाक्यरचना संभवतीति अपौरुषेयो वेद इत्यादि तत्रोक्तमवगन्तव्यम् ।

